अत्र यदीत्यर्थवादमात्रमुदाहृतवचननिचयपर्य्यालोचनया सर्व्वेषां द्वादश्युपवासावगमात् । यदा तु दशमीविद्धैकादशी उदयमात्रपर्य्यन्ता द्वादशी च समा न्यूना वा तदा गृहिणाम् पूर्व्वोपवासः ।

स्कन्दपुराणे ।

पारणाहे न लभ्येत द्वादशी यदि किञ्चन ।

ऋष्यशृङ्गः ।

पारणाहे न लभ्येत द्वादशी कलयापि चेत् ।

अनयोरुत्तरार्द्धं ।

तदानीं दशमीविद्धा उपोष्यैकादशी तिथिः ।

पद्मपुराणे ।

विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम् ॥
विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।
अविद्धापि तथा विद्धा परतो द्वादशी यदि ॥

हारीतोऽपि ।

त्रयोदश्यां यदा न स्यात् द्वादशी घटिकाद्वयम् ।
दशम्येकादशीमिश्रा सैवोपोष्या तदा तिथिः ॥

तत्त्वसागरसंहितायामपि ।

दशम्येकादशी यत्र नोपोष्या सा कुलापहा ।
सैवोपोष्या कलामात्रा द्वादश्यां चेन्न विद्यते ॥

भविष्ये ।

एकादशी कलाप्येका परतो न च वर्द्धते ।

गृहिभिः पुत्त्रवद्भिश्च सैवोपोष्या तदा तिथिः ॥

अस्मिन्नेव विषये यत्यादेर्मुमुक्षोरुत्तरवैवोपवासः ।

तथाच विष्णुरहस्ये ।

दशमीमिश्रिता पूर्वा लुप्येतैकादशी परा ।

एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् ॥

शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः ।

पारणञ्च त्रयोदश्यां तत्र क्रतुशतं भवेत् ॥

यदैव दशमीविद्धं भवत्येकादशीदिनम् ।

उपोष्या तु तदा शुद्धा द्वादशी मोक्षकाङ्क्षिभिः ।

पारणन्तु त्रयोदश्यां तत्राक्षयफलं भवेत् ॥

यान्येतानि वचनानि कूर्म-पद्मपुराणयोः ।

एकादशी दशाविद्धा परतो द्वादशी न हि ।

उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणे ।

एकादशी दशाविद्धा द्वादशी न च वर्द्धते ।

तदोपोष्या द्वादशी स्यात्त्रयोदश्यान्तु पारणमिति ॥

तान्युदाहृतवाक्यपर्य्यालोचनया मुमुक्षुविषयाणि। यदा तु दशमीविद्धैकादशी द्वादश्यां विद्यते द्वादशी चोदयपर्य्यन्ता विद्यते च तदा द्वितीयैवोपोष्या नित्या काम्या च ।

तथाच नारदः ।

द्वादश्येकादशी यत्र सङ्गता चिद्शाधिप ।

तामुपोष्य ततः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणेऽपि ।

एकादशीकला यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणे च ।

एका लिप्ता समायुक्ता याति वृद्धिं परा तिथिः ।
द्वादशी पारणार्थां च नोपोष्यं पूर्ववासरम् ॥

बौधायनोऽपि ।

कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

पद्मपुराणेऽपि ।

द्वादशीमिश्रिता कार्य्या सर्व्वत्रैकादशी तिथिः ।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥

तथा ।

सर्व्वत्रैकादशी कार्य्या द्वादशीमिश्रिता नरैः ।
प्रातर्भवतु वा मा वा यतोनित्यमुपोषणम् ॥

तत्त्वसागरसंहितायामपि ।

द्वादश्येकादशी यत्र सङ्गता त्रिदशाधिप ।
तामुपोष्य ततः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

नारदः ।

द्वादश्येकादशी यत्र द्वादशी परतोऽपि च ।
द्वादश्यां पारणं कुर्य्यात् क्रतुकोटिफलं लभेत् ॥

ब्रह्मपुराणेऽपि ।

द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

पद्मपुराणेऽपि ।

एकादशीकलायुक्ता येन द्वादश्युपोषिता ।
किं तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप ॥
एकादशी द्वादशी च तत्र सन्निहितो हरिः ।
उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ।

तत्त्वसागरसंहितायाम् ।

द्वादश्येकादशी यत्र सञ्जाता त्रिदशाधिप ।
तामुपोष्य ततः कुर्य्यात् त्रयोदश्यान्तु पारणम् ॥
द्वादश्येकादशी यत्र परतो न त्रयोदशी ।
उपोष्या द्वादशी भक्त्या द्वादश्याञ्चैव पारणम् ॥

किन्त्वेवं विविधविषये द्वितीयैव ग्राह्या दशमीविद्धाया निषेधात् ।

तथाच स्कन्दपुराणे ।

तस्मात् सर्वप्रयत्नेन पूर्वविद्धां विवर्जयेत् ।

नारदीयपुराणे ।

पूर्वविद्धा न कर्त्तव्या तृतीया षष्ठ्यपि द्विज ।
अष्टम्येकादशीभूता धर्म-कामार्थमोक्षिभिः ॥

अत्रैकादश्यादयः परविद्धा उपोष्याः प्रतीयन्ते विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्, अन्यथा नोपोष्या इति वाच्यं, न तु पूर्वविद्धा नोपोष्येति परविद्धैकादश्युपोष्येति वचनाच्च ।

तथाच सुमन्तु-सनत्कुमारौ ।

तृतीयैकादशी षष्ठी चतुर्थी च चतुर्दशी ।
अमावास्याष्टमी चैव ता उपोष्याः परान्विताः ॥

शारदापुराणे ।

एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी ।
तृतीया च चतुर्थी च अमावास्याष्टमी तथा ।
उपोष्याः परसंयुक्ता नोपोष्याः पूर्वसंयुताः ॥

पैठीनसिः ।

एकादशी तथा षष्ठी शुक्लपक्षे चतुर्दशी ।
तृतीया च चतुर्थी च ता उपोष्याः परान्विताः ॥

यदा च दशमीविद्धैकादशी द्वादश्यां च कियन्माचा विद्यते राचिशेषे च चयोदशी तदा गृहस्थव्यतिरिक्तानां तत्रोपवासः ।

तथाच पद्मपुराणे ।

द्वादशीसंयुता तत्र भवत्येकादशी कला ।
दिनचयेऽपि सा पुण्या दशम्या न कथञ्चन ॥
चिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
पुण्यं क्रतुशतस्योक्तं चयोदश्यान्तु पारणम् ॥

नारदीयपुराणादौ ।

एकादशी द्वादशी च राचिशेषे(१) चयोदशी ।
उपवासः प्रशस्तोऽसौ यद्येवं पूज्यते तिथिः ॥
एकादशी द्वादशी च विशेषेण चयोदशी ।

---

(१) विशेषेणेति ग० ।

त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।
य उपास्ते सदा भक्त्या स नरो दिवि मोदते ॥
एकादशीकलायुक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यान्तु यो भुङ्क्ते तस्य विष्णुः प्रमोदति ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

कूर्मपुराणे ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ॥
उपवासः कृतस्तस्यां सर्वपातकनाशनः ।
एकादशी द्वादशी च विशेषेण त्रयोदशी ॥

इति पुराणात् ।

एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
दिनत्रयेऽपि सा पूज्या दिवसस्यापरेऽहनि ॥

स्कान्देऽपि ।

द्वादशीसंयुता यत्र भवत्येकादशी तिथिः ।
दिनत्रयेऽपि सा पूज्या न दशम्या कथञ्चन ॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
सोपोष्या च प्रयत्नेन महापुण्यविवर्द्धनी ॥

भविष्यत्पुराणे ।

एकादशी कलाप्येका द्वादशी सकलं दिनम् ।

त्रयोदशी उषःकाले वैष्णवन्तद्दिनत्रयम्।
सर्वपापहरं प्रोक्तं तदुपोष्यमिति स्मृतिः॥

स्कन्दपुराणे।

एकादशी कलायुक्ता द्वादशी क्षीयते यदा।
उपोष्या च महापुण्या सर्वपापहरा तिथिः॥

सुमन्तुः।

एकादशी कलायुक्ता द्वादशी लुप्यते यदा।
एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः॥

अस्मिन् विषये पुत्त्रवतो गृहस्थस्य उपवासो निषिद्धः।

तथा पद्मपुराणे।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
तत्राहस्पृगहोरात्रं नोपोष्यं तत्सुतार्थिभिः॥

कूर्मपुराणे।

एकादशी द्वादशी च विशेषेण त्रयोदशी।
उपवासं प्रकुर्व्वीत पुत्त्र-पौत्त्रसमन्वितः॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्॥

इत्यपि तद्विषयं। तस्यैवोपवासनिषेधे सति तस्मिन्नेव दिने उपवासप्रत्याम्नायत्वेन नक्तं विहितं वृद्धशातातपेन।

दशम्येकादशीविद्धा द्वादशी च क्षयं गता।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते इति॥

प्रचेताः।

एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
तत्र स्नानं जपं होमं कृत्वा ब्राह्मणवाचनम् ।
निर्वर्त्त्य द्वादशीकर्म ततो नक्तेन वर्त्तयेदिति ॥

विष्णुधर्म्मोत्तरे ।

एकादशी यदा विद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

स्कन्दपुराणे ।

एकादशीकला यत्र द्वादशी च क्षयं गता ।
तत्र नक्तं प्रकुर्वीत नोपवासो गृहाश्रमे ॥

पद्मपुराणे ।

एकादशीकलायुक्ता द्वादशी क्षीयते यदा ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

ननु "नोपोष्यं तत्सुतार्थिभिरिति सुतार्थिनां पुत्त्रकामानां उपवासप्रतिषेधोऽयं न निष्कामाणां गृहस्थानां कामान्तरयुक्तानां वा । तदसत् नायं पुत्त्रकामप्रतिषेधः किन्तु,—

त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।

इत्यादिवचनैरविशेषेण सर्वेषां तत्रोपवासे प्राप्ते "नोपोष्यं तत्सुतार्थिभिरित्यनेन निवार्य्यते पुरुषविशेषमाचख्य, तत्रापि सुतार्थिशब्देन गृहस्थमात्रमभिधीयते, तस्य सुतार्थित्वं संभवतीति न स्वरूपेण सुतार्थिता यत्र विद्यते ।

दिनक्षयेऽपि सा पुण्या यतीनामुत्तमा तिथिः ।

इति यतेरेव तादृश्या उत्तमत्वाभिधानात् । तत्र यतिशब्दः

किं सुतार्थितारहितपरः सुतार्थिशब्दो वा सुतार्थित्वसम्भावनापर-
इति सन्देहे सुतार्थिशब्द एव सम्भावनापरो ग्राह्यः ।

उत्तरान्तु यतिः कुर्य्यात्पूर्वामुपवसेद्गृही ।

इति गृहस्थमात्रस्य ।

उपवासं न कुर्वीत पुत्त्र-पौत्त्रसमन्वितः ।

इत्यनयोर्वाक्ययोरेकार्थत्वाय पुत्त्रसंवन्धिमात्रपरतैव युक्ता, पुत्त्र-संवन्धित्वञ्च गृहस्थादिना न सम्भवतीति तदापेक्षः, एतावतैवास्य चरितार्थत्वे किमिति न विध्यनपेक्षितो वाक्यभेदापादकोविशेषोऽङ्गीकर्त्तव्यः ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।

तस्मिन् स्नानं जपो होमो नोपवासो गृहाश्रमे ॥

इति गृहस्थमात्रस्य दिनक्षये निषेधदर्शनात् ।

अन्ये त्वाहुः ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।

उपवासं न कुर्वीत पुत्त्र-पौत्त्रसमन्वितः ॥

इति वचनात् सुतार्थिभिरिति सामान्यसुतार्थित्वं पुत्त्र-पौत्त्र-समन्वित इति विशेष उपसंह्रियते, पुत्त्रवतापि त्रिस्पृशायां नक्तं वा कार्य्यं भक्षं वा किञ्चिद्भक्षयित्वोपवासः कर्त्तव्यः ।

उपवासनिषेधे तु भक्षं किञ्चित्प्रकल्पयेत् ।

न दुष्यत्युपवासे स उपवासफलं भवेत् ॥

इत्यादिवचनानुरोधात् ।

अपरे त्वाहुः । अत्रोपसंहारमनुमन्यामहे न तु भक्षप्रकल्पनं

"उपवासनिषेधे तु भक्षमित्यस्य सामान्यशास्त्रस्यैकादशीदिनत्रयनक्त-विधायकविशेषशास्त्रेण बाधात् । तेन भक्षप्रकल्पनमन्यत्र वेदितव्यं तच्चानेकप्रकारं ।

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यं ।
यत्पञ्चगव्यं यदि वापि वायुः
प्रशस्तमत्रोत्तरमुत्तरञ्चेति ॥

अन्ये त्वाहुः यदत्र नक्तविधानं तत्सकामविषयं "नोपवासो गृहाश्रम इति काम्युपवासः प्रतिषिध्यते ।

एकादशीकला यत्र द्वादश्यनुगता भवेत् ।
लुप्यते द्वादशी तत्र नोपवासः फलार्थिनाम् ॥

इति वचनात् नित्योपवासनिषेधाद्विकल्पप्रसङ्गाच्च । तथा पुत्र-वद्गृहिविषये निषेधमपेक्ष्य पाक्षिकविधानन्तदितरविषये नित्य-वद्विधानमिति वैरूप्यं । काम्यं तु फलं रागादेव प्रवृत्तेर्निषेधो घटत इति विकल्पो नास्ति विधिव्यापारवैरूप्यं, पर्युदासे च सम्भवे युक्ते सति उपवासे च निषिद्धे सकामः किं कुर्य्यादित्यपेक्षितेन नक्तं विधातुं उचितं भवति ।

एवञ्च ।

एकादशीकलाप्येका द्वादशी यत्र लुप्यते ।
तत्रोपवासं कुर्वीत निष्कामो विष्णुतत्परः ॥

इति वचनमुपपन्नं भवतीति तदयुक्तं । पापपरिहारकाम-विष्णुसायुज्यकाम-मुमुक्षूणामप्युपवासविधानात् ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ।
उपवासः कृतस्तस्यां महापातकनाशनः ॥
द्वादश्यान्तु यदा भूप दिनत्रयतिथिर्भवेत् ।
तदोपवासः कर्त्तव्यो विष्णुसायुज्यमाप्नुयादिति ॥

सायुज्यमिच्छतेति क्वचित्पाठः ।

एकादशी द्वादशी च रात्र्यन्ते च त्रयोदशी ।
उपवासः कृतस्तत्र मोक्षमेव प्रयच्छतीति ॥

तथा ।

दिनत्रये तु कर्त्तव्य उपवासो मुमुक्षुभिः ।

इति काम्यस्यापि विहितत्वेन विकल्पस्य तदवस्थत्वात् तथा हि विधेः प्रवृत्तिलक्षणा परिहृतेति, तस्माद्यथोक्तमेव न्यायः ।

अन्ये त्वाहुः । यदत्र नक्तविधानं तदसामर्थ्यविषयं । न च विद्धाविद्धयोरशक्तेस्तुल्यत्वाद्यदेतद्विद्धाया नैमित्तिकविशेषविधानं तदसमर्थविषये असमञ्जसं स्यादिति वक्तव्यं । विद्धायां ह्येकभक्तादिरूपोपवासप्रत्याम्नायोदुर्घट एव प्रतीयते रात्रावुपवाससङ्कल्पविधानात् ।

विद्धोपवासेऽनश्नंस्तु दिनन्त्यक्त्वा समाहितः ।
रात्रौ संपूजयेद्देवं सङ्कल्पञ्च तदाचरेत् ॥

तत्प्रत्याम्नायनस्यापि स एव कालोयुक्तः एकभक्तकालस्त्वसौ न भवति ।

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तस्माद्दिवैव हि ॥

इति तस्य द्विवेव विहितत्वान्नक्तमेव तदानीं भवतीति सम्यगुक्त-मसमर्थविषयमिदमिति युक्तं सामान्यतो दिनचयेऽस्मिन् दिनचय-विशेषे च पुत्त्रवतो गृहस्थस्योपवासनिषेधादनियमेन भक्षकल्पनायां प्राप्तायां नियमविधानार्थत्वेनाकाङ्क्षितसमर्पणेनार्जवेनैव वाक्यस्योप-पत्तेः तेन यथोक्तमेव साधु । एतेनैतन्निरस्तं ।

एकादश्यां तथा नक्तं द्विजः कुर्याद्यथाविधि ।
मार्गशीर्षशुक्लपक्षादारभ्याब्दं विधीयते ॥

इति वाराहपुराणोक्तविषयं द्वादशीचये नक्तविधानं एकादशी चेत्युदाहृतवचने पूर्वोपवासविधायकविरोधादिति सामान्यशास्त्रस्य विशेषशास्त्रेण बाधात् उपवासनिषेधे चाकाङ्क्षितसमर्पणेन वाक्यस्यो-पपत्तेः उत्पत्तिशिष्टैकादशीबाधप्रसङ्गाच्च ।

कलाप्येकादशी यत्र द्वादश्यनुगता भवेत् ।
दिनचयेऽपि सा पुण्या यतीनामुत्तमा तिथिः ॥

अत्र च यतिग्रहणं नेतरव्यावृत्त्यर्थं । तथा सति पुत्त्रवतो-गृहस्थस्य प्राप्त्यभावेन निषेधानुपपत्तेः । तेन यतीनां वैशिष्ट्यमात्र-प्रतिपादनपरमेतत् तदयुक्तं 'उत्तमेति' दिनचयेऽपीत्यपिशब्देन दिनचयमन्तरेणापि यतीनां द्वितीया चोत्तमेति दर्शितं ।

यत्तु ऋष्यशृङ्गवचनं ।

पूर्वविद्धा न कर्त्तव्या षष्ठ्येकादश्यथाष्टमी ।
एकादशीन्तु कुर्वीत चीयते द्वादशी यदीति ॥

तच्छुद्धिकाम-विष्णुसायुज्यकाम-मुमुक्षुव्यतिरिक्तविषयं उदाहृत-वाक्यानुरोधात् ।

अविद्धानि निषिद्धैर्येन लभ्यन्ते दिनानि तु।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः।
तदर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः॥

'निषिद्धैः' दशम्यादिभिः, अविद्धान्येकादश्यादिदिनानि।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
उपवासं न कुर्वीत पुत्त्र-पौत्त्रसमन्वितः॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
अहस्पृगहोरात्रं[1] नोपोष्यं तत्सुतार्थिभिः॥

इत्यादिवचनादुपोष्यत्वेन न लभ्यन्ते न स्वरूपेण चेत्यर्थः। यत्तु केचित् द्वादशीदिनत्रये दशमीविद्धां नित्यामेकादशीं गृहस्थः कुर्वीतेति वचनव्याख्यानं कृतं तदेवंविधसङ्कोचे कारणाभावादयुक्तं। विद्धैकादश्युपवासप्रतिषेधवचनान्युदाहरिष्यन्ते।

तत्र वासिष्ठसंहितायां।

दशम्येकादशी यत्र तत्र नोपवसेद्बुधः।
अपत्यानि विनश्यन्ति स्वर्गलोकं न गच्छति॥

ब्रह्मपुराणे व्रतखण्डे।

उपोष्यैकादशीं मोहाद्दशमीशेषसंयुतां।
न नरः सुखमाधत्ते इह लोके परत्र च॥
धृतराष्ट्रेण मैत्रेयः पृष्टः प्राह नराधिपं।

---

(१) 'अहस्पृगहोरात्रं' इति तृतीयचरणं छन्दोभङ्गदोषदुष्टं, परन्त्वत्र त्रिदिनस्पृगहोरात्रं इत्येव चरणं समीचीनं भाति।

यदर्थन्ते वियोगोऽभूत् पुत्राणां भार्य्यया सह ॥
पूर्वन्त्वया सभार्य्येण दशमीशेषसंयुता ।
कृता चैकादशी राजंस्तस्येदं कारणं मतं ॥
तस्मादेकादशी युक्ता दशम्या नरसत्तम ।
न कर्त्तव्या प्रयत्नेन निष्फला द्वादशी यदि ॥
यथा चैकादशी राजन् द्वादशी च तथा नृणां ।
समाना तत्फला प्रोक्ता व्रतेऽस्मिंश्चक्रपाणिनः ॥
न चाहं स्वैरिणी भार्य्या न चाहमपतिव्रता ।
न चेह कलुषं येन किं पापं त्वन्यजन्मनि ॥
रामपत्न्या वचः श्रुत्वा वाल्मीकिर्मुनिपुङ्गवः ।
चिरन्ध्यात्वा महाराज तामुवाचेदृशं वचः ॥
दशम्येकादशीं पूर्व्वां समुपोष्य जनार्द्दनः ।
अभ्यर्चितस्त्वया देवि तस्येदं कर्मणः फलं ॥
उपोष्यैकादशी शुद्धा नोपोष्या दशमीयुता ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणं ॥
वशिष्ठः समुवाचेदं पृष्टोमान्धातृभार्य्यया ।
दशम्येकादशी देवि पुरा चोपोषिता त्वया ॥
तेन ते कर्मणा चेह सभर्त्तृसुत-बान्धवैः ।
वियोगं समनुप्राप्ता सत्यं विद्धि पतिव्रते ॥
यानि कानीह पापानि त्रैलोक्ये सम्भवन्ति वै ।
तेषां स्थानं दशम्या वै सहैवैकादशी मता ॥
सप्तजन्मकृतं पुण्यं नश्यते नात्र संशयः ।

दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशश्च परे तु नरकं व्रजेत् ॥
नोपोष्या दशमीविद्धा सदा चैकादशी तिथिः ।
तामुपोष्य नरो जह्यात् पुण्यं वर्षशतोद्भवं ॥

तथा ।

दशम्या चैव विद्धायामेकादश्यामुपोषितः ।
तस्यायुः चीयते नित्यं नारदोऽहं ब्रवीम्यदः ॥
सत्यं सत्यं विनश्येत सन्ततिस्तु नचान्यथा ।
दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशः स्यात् परे तु नरकं व्रजेत् ॥

तथा ।

मुहूर्त्तेनापि संयुक्ता दशम्येकादशी तथा ।
तामुपोष्य नरो मोहात् सुखाद्धर्माच्च हीयते ॥

कूर्म्म-नारदीयपुराणयोः विष्णुरहस्ये च ।

दशमीशेषसंयुक्तामुपोष्यैकादशीं किल ।
संवत्सरकृतेनेह नरोधर्म्मेण मुच्यते ॥
दशमीशेषसंयुक्ता गान्धार्य्या समुपोषिता ।
तस्याः पुत्त्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

ब्रह्मवैवर्त्तेऽपि ।

दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीफलं तस्य नश्येद्द्वादशवार्षिकमिति ॥
यैः कृता दशमीविद्धा विद्यामोहेन मानवैः ।

ते गता नरकं घोरं युगान्येकोनविंशति[१] ॥

सौरधर्म्मोत्तरे ।

एकादशीमुपोष्यैतद्द्वादशीमथवा पुनः ।
विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित् ॥

भविष्यत्पुराणे ।

पूर्व्वाविद्धां पलार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
यदीच्छेदात्मसन्तानं चतुर्षु नियमेष्वपि ॥
नोपोषितव्यं नक्तञ्च नैकभक्तमयाचितं ।
नन्दायां पूर्व्वविद्धायां कुर्य्यादैश्वर्य्यमीहते ॥

ब्रह्मवैवर्त्तेऽपि ।

दशम्या यच्च शेषस्य एकादश्यां भवेद्यदि ।
सा तिथिः सकला ज्ञेया दशमीकालमिश्रिता ॥
गङ्गोदकस्य सम्पूर्णं यथा लाव्यघटं भवेत् ।
सुराविन्दुसमायुक्तं तत्सर्वं मद्यतां व्रजेत् ॥
हलाहलं विषं रौद्रं कः पिबेन्मूढधीर्नरः ।
दशमीशेषसंयुक्तं क उपोष्यति सद्व्रती ॥
एवं ज्ञात्वा मुनिश्रेष्ठ दशमीशेषसंयुता ।
वर्जिता मुनिभिः सर्व्वैर्वासुदेवमभीप्सुभिः ॥

नारदीयपुराणे ।

लववेधेऽपि विप्रेन्द्र दशम्येकादशी यदा ।
सुराया विन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ॥

(१) युगान्येकोनसप्ततीति ख० ।

श्वदृतौ पञ्चगव्यञ्च दशम्या दूषितान्त्यजेत् ।

तथा ।

एकादशीमुपोष्य स्यादशजो दशमीयुतां ।
दशमीमिश्रिता हन्ति फलमेकादशीकृतं ॥

कौशिकः ।

दशम्येकादशीविद्धा सुरैश्वर्य्यविनाशिका ।

पैठीनसिः ।

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा तत्र नोपवसेद्बुधः ॥

वार्षायणिः ।

भूतविद्धा त्वमावास्या दशम्येकादशीयुता ।
दशाविद्धा तु सामर्थ्यं हन्ति पुण्यं पुराकृतं ॥

गारुड़पुराणेऽपि ।

विद्धामेकादशीं विप्रास्त्यजन्त्येतां मनीषिणः ।
तस्यामुपोषितोयाति दारिद्र्यं दुःखमेव च ॥

स्कन्दपुराणे ।

द्वापरान्ते तु गान्धारी कुरुवंशविवर्द्धिनी ।
करिष्यति च सेनानीर्मूढ़भावाच्छिखिध्वज ।
तेन पुत्त्रशतं तस्या नाशमेष्यत्यसंशयम् ॥
एवं नन्दा न कर्त्तव्या दशमीसंयुता विभो ।
कला काष्ठापि या चैव दृश्यते दशमी विभो ।
एकादश्यां तु सेनानीः कर्त्तव्या न कथञ्चन ॥

एतानि वाक्यानि विद्धैकादश्यनुज्ञाव्यतिरिक्तविषयाणि । कौर्मेऽपि ।

अरुणोदयवेलायां विद्धा काचिदुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

भविष्यत्पुराणेऽपि ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
न तत्रैकादशी कार्य्या धर्म-कामार्थनाशिनी ॥

तथा ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
पापमूलं सदाख्येयमेकादश्यामुपोषणम् ॥

तथा ।

अरुणोदये दशमी गन्धमात्रं भवेद्यदि ।
द्रष्टव्यं तत्प्रयत्नेन वर्जनीयं नराधिप ॥

नारदीयपुराणे मोहिनीवाक्यं ।

मोहिन्युवाच ।

दशम्याः प्रान्तमादाय यदोदेति दिवाकरः ।
तेन स्पृष्टं हरिदिनं तद्दत्तमसुराय वै ॥
सूर्य्योदयविहीनं हि दृश्यं दृश्यञ्च लाघवं ।
दशम्यन्तं प्रयच्छन्ति स्पृष्टं हरिदिनेन हि ॥
अग्नेर्विहारकाले तु वध्वोपस्थानके तथा ।
प्रातः सन्दोहकरणे पश्चिमवेदने तथा ॥
विरामे सर्वदेवानां मार्जनीग्रहण तथा ।

द्वारोद्घाटनवेलायां स्नानकाल उपस्थिते ॥
यतीनां दीक्षितानाञ्च वादित्रनिनदे कृते ।
यत्राक्रान्ता दशम्या च एकादशी समन्विता ।
प्रदीयतां निवासार्थं यद्यस्ति मयि चेद्दया ॥
न याचे नोदयं देवा न याचे तद्दिनं हरेः ।
वैनतेयोदयं मह्यं दीयतां सुरसत्तमाः ॥
दग्धा या मुनिना देवाः क्षीणा या स्वार्थसञ्चयैः ।
विश्रमार्थञ्च तुष्ट्यर्थं(१) एतत्प्रान्तं प्रदीयतां ॥

वशिष्ठ उवाच ।

तन्मोहिन्या वचः श्रुत्वा सुराः सर्वे महीपते ।
सुमन्त्र्य सुचिरं कालं दिगम्बरपुरोगमाः ॥
धर्मसंस्थापनायैव वैकुण्ठध्वंसनाय च ।
पाषण्डिनां हि वृद्ध्यर्थं पापसंजननाय वै ॥
उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा ।
पुरस्कृत्य च तत्रेन्द्रं तथान्यांश्च सुरान्नृप ।
ऊचुस्ते मोहिनीं देवा लोकसम्भावनाय वै ॥
दत्तं मोहिनि ते स्थानं प्रत्यूषसमयान्तिकम् ।
दुष्टं हरिदिनोपेतं दशम्यां प्रान्तमेव हि ॥
तेन जम्भेन जुष्टन्तु नेतद्देवैर्न मानवैः ॥

अरुणोदयवेलायां परित्यजेदिति भावः । अरुणोदयोऽपि पुराणे दर्शितः ।

---

(१) पुष्ट्यर्थमिति ग० ।

चतस्रोघटिका प्रातररुणोदय उच्यते ।
यतीनां स्नानकालस्तु गङ्गाम्भःसदृशः स्मृतः ॥ इति ॥

यतीनां स्नानकाल इत्यनेनोदयादर्वागपि घटिकाचतुष्टय-मरुणोदय इत्युक्तं भवति । एतान्यरुणोदयनिषेधवाक्यान्यपि यदा द्वादश्यां कियन्मात्राप्येकादशी दृश्यते त्रयोदश्याञ्च कियन्मात्रा द्वादशी तदा परित्याज्येत्येवंपराणि द्रष्टव्यानि, काम्यैकादशीव्रत-विषयाणि वा ।

गारुड़पुराणे ।

सन्दिग्धैकादशी नाम वर्जयेद्धर्मकाङ्क्षितः ।
पुत्त्र-राज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
उदयात्प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा ।
संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये ॥
पुत्त्र-पौत्त्रप्रवृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
आदित्योदयवेलायामारभ्य षष्टिनाड़िका ।
सम्पूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥
पुत्त्र-पौत्त्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

काण्वोऽपि ।

अरुणोदयवेलायां दशमी यदि सङ्गता ।
अत्रोपोष्या द्वादशी स्यात्त्रयोदश्यान्तु पारणम् ॥

पुराणेऽपि।

अरुणोदयवेलायां दशमी यदि सङ्गता।
रविचक्रार्द्धमात्रापि द्वादशीमुपवासयेत्।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्॥

गोभिलः।

अरुणोदयवेलायां दशमी यदि सङ्गता।
संयुक्तैकादशीं तां तु मोहिन्या दत्तवान् विभुः॥

विष्णुः।

उदयादुपरिविद्धा दशम्येकादशी यदा।
दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः॥
तस्मात्सर्व्वप्रयत्नेन सम्पूर्णैकादशीं त्यजेत्।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम्॥

नारदीयपुराणेऽपि।

बहुवाक्यविरोधेन सन्देहो जायते यदा।
द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम्॥
दिनत्रये च सम्प्राप्ते उपोष्या द्वादशी भवेत्।
दशमीशेषसंयुक्तां न कुर्व्वन्ति कदाचन॥

एतानि काम्यैकादशीविषयाण्येव। तथाच तेषु तेषु वाक्येषु धर्मकाङ्क्षित-पुत्र-पौत्रसम्बद्धार्थमित्येवमादीनि फलानि श्रूयन्ते। यदा अरुणोदयविद्धोपवासनिषेधवाक्यानि वैष्णवविषयाणि, शैवादीनान्त्वेकादश्युपवासाधिकारे तत्रोपवासे नास्ति दोषः।

तथाच भविष्यत्पुराणे।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम् ॥

काम्यैकादशीनिर्णयः ब्रह्मवैवर्त्ते एकादशीप्रकरणे अरुणोदय-वेधनिन्दायां शौनक उवाच ।

व्रतमेकादशीं सूत विशेषेण प्रकीर्त्तय ।
सर्वपापप्रशमनं कृते यस्मिन् भवेन्नृणाम् ॥
कीदृश्येकादशी कार्य्या कथं कार्य्या कथं हरिः ।
पूजनीयः फलं किञ्च भवेत्तत्सूत कीर्त्तय ॥
उद्यापनविधानञ्च कार्य्यं व्रतफलाप्तये ।
तत्तथा सूत सर्वं हि वद सम्प्रति शृण्वतः ॥

सूत उवाच ।

इदमर्थं पुरा शूरो वसुदेवपिता मुनिम् ।
कृष्णद्वैपायनं व्यासं पप्रच्छ तव यन्मतम् ॥

शूर उवाच ।

कथिता वैष्णवा धर्मा व्यास मुक्तिकरा नृणाम् ।
प्रधानं तत्र सर्वेषां त्वयोक्तं द्वादशीव्रतं ॥
कीदृशी सा कथं कार्य्या किंफला कस्य पूजनं ।
विधेयमेतन्नो ब्रूहि सर्वज्ञस्त्वं हि मे मतिः[१] ॥

सूत उवाच ।

इत्युक्तः प्रत्युवाचासुमुत्तरं यदुकुलोद्भवम् ।
व्यासो यथावत्तदहं वच्मि तच्छृणु शौनक ॥

---

(१) मत इति ख० ।

व्यास उवाच ।

सुपुण्यैकादशी शूर यदि शल्यविवर्जिता ।
कर्त्तुर्निरयपाताय सशल्या ह्युपोषिता ॥
अरुणोदयवेलायां या स्तोकापि तिथिर्भवेत् ।
पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विना ॥
तत्र चेद्दशमीवेधोऽतिवेधो वापि जायते ।
महावेधाय वा योगो रक्षमां सफलं भवेत् ॥
तदेतद्दशमीशल्यं सन्त्याज्यं द्वादशीदिने ।
षड़हं शोधयित्वा तु सम्यक् चन्द्रार्ककोविदैः ॥

ततः सशल्या परिवर्जनीया
धर्मार्थ-कामैस्तु बुधैर्मनुष्यैः ।
विहीनशल्यापि विवर्जनीया
यदाग्रतोवृद्धिमुपैति पक्षः ॥

शल्यं वेध इति प्रोक्तं पुराणार्थविचक्षणैः ।
तत्याज्यं दूरतो गाङ्गं सुराविन्दुयुतं यथा ॥
चतस्रोघटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाड़ीनां तदुभे सन्ध्ये दिनस्याद्यन्तसंज्ञिते ॥
तदादिवेधरहितामुपोष्यामाहुरासुरीम् ।
विपरीतं परित्याज्यमासुरञ्च दिनत्रयम् ॥
नन्दा प्रातर्भवेद्भद्रा मध्ये प्रान्ते भवेज्जया ।

देवं दिने त्रयं पूर्णा नन्दा भद्रेति चासुरं ।
त्रयोदशीदिने प्राप्ते द्वादशी लभ्यते यदा ।
द्वादशद्वादशीर्हन्ति त्रयोदश्यान्तु पारणे ॥
त्रयोदश्या दिने प्राप्ते द्वादशी कलया भवेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
विनोपवासनियमैर्द्वादशी लङ्घिता नृणां ।
करोति धर्महरणमस्नाते च सरस्वती ॥
नन्दापूर्वां जयाप्राप्तां तस्माद्भद्रामुपावसेत् ।
पूर्णादिने च भद्रान्तां नन्दां सुर कथञ्चन ॥
ये तु मिथ्याभिधानेन मोहयन्ति नरा भुवि ।
विमूढ़ा पापिनस्तेषां रौरवं शरणं चिरं ॥
अध्यापयन्त्यविज्ञाय पण्डितम्मन्यबुद्धयः ।
कारयन्त्यबुधा लोके द्वादशीं दशमीयुतां ॥
ये कारयन्ति कुर्वन्ति द्वादशीं दशमीयुतां ।
शुद्धये तन्मुखं वीक्ष्य सूर्यदर्शनमाचरेत् ।
नमो नारायणायेति जपेद्वा द्वादशाचरं ॥
कृते पापे तु तापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥
वराका किमु जानन्ति प्राणिनां कार्य्यचिन्तनम् ।
धिग्विमूढधियः पापान् धर्मविप्लवकारिणः ॥
हिंसितो भगवान् तेन द्वादशी दशमीयुता ।
कृता येन द्विजश्रेष्ठ सम्यगुक्तं मया तव ॥

संस्थितो भगवान् कृष्णो द्वादशीरूपधृग्यतः ।
तस्मादसंशयं त्याज्या द्वादशी दशमीयुता ॥
नन्दा शरीरं देवस्य भद्रा ह्यात्मा ह्यजोऽव्ययः ।
तस्मात्सरोगं त्यक्ताङ्गमात्मानन्तूपवासयेत् ॥
द्वयोर्विवदतोः श्रुत्वा द्वादशीं समुपोषयेत् ।
पारणन्तु त्रयोदश्यां एष शास्त्रविनिर्णयः ॥
द्वादशी दशमीयुक्ता यत्र शास्त्रे प्रतिष्ठिता ।
न तच्छास्त्रमहं मन्ये यदि ब्रह्मा स्वयं वदेत् ॥
कुर्वतामिह पापानि धार्ष्ट्यं पश्यत यादृशं ।
कारयन्तीतरान्मूढ़ान् वराकान् प्राणिनः कथं ॥
द्वादशी दशमीविद्धा गान्धार्य्या समुपोषिता ।
तस्याः पुत्त्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥
अर्द्धरात्रेऽपि केषाञ्चिद्दशम्या वेध इष्यते ।
अरुणोदयवेलायां नावकाशो विचारणे ॥
कपालवेध इत्याऊराचार्य्या ये हरिप्रियाः ।
न तन्मम मतं यस्मात् त्रियामा रात्रिरिष्यते ॥
तत्रातरेव वदनं दैविकं धर्मसाधनं ।
मुख्यमाऊरतस्त्यागस्तत्र वेधस्य निश्चितः ॥

सूत उवाच ।

कीदृशश्च भवेद्वेधो योगो विप्रेन्द्र कीदृशः ।
वेध-योगौ समाचक्ष्व तयोर्दुष्टसुपोषणं ॥

श्रीव्यास उवाच ।

चतस्रो घटिकाः सूर अरुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकात्रयं ।
अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्य्योदये बुधैः ॥
यातुधानव्रतं योगे महावेधन्तु वाष्कले ।
जम्भासुरस्यातिवेधे मोहिनी वेधलेशिनी ॥
दशम्याः प्रान्तविद्धं हि यद्यदुष्टं हरेर्दिनं ।
तत्पुरा विबुधैर्दत्तं मोहिन्यै तद्विपर्य्ययात् ॥
वरमेकादशीत्यागो न कार्य्या दशमीयुता ।
सूर मे निश्चयः सोऽयं न हता द्वादशी शुभा ।
दशमीशेषसंयुक्ता किं पुनर्बहुभाषितैः ॥

इत्थं विचार्य्य निपुणैः सह विद्धैकादश्या द्वादश्यामभावे द्वादश्यास्त्रयोदश्यामभावेऽपि "एकादशीं दशाविद्धां पक्षवृद्धौ विवर्ज्जयेत् । पक्षहानौ स्थिते सोमे कुर्वीत दशमीयुतां" ॥ इति श्रुतेरमावास्यायाः पौर्णमास्या वा प्रतिपदि सद्भावेऽपि शुद्धा द्वादश्येव "तिथिहानौ प्रयोक्तव्या समस्त्येकादशी यदि । उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणं" ॥ इत्यनुसारादुपोष्या, विहीनशस्यापि विवर्ज्जनीया, "यद्यतो वृद्धिमुपैति पक्षः" इति तु यद्यपि स्यात्तं तथापि एकादशीं दशाविद्धामित्यस्य "समस्त्येकादशी यदीत्यस्य च विशेषणस्यान्यथानुपपत्तेः विहीनशब्दस्य चात्यान्तास्पवाचित्वेना-

प्युपपत्तेः "अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु । मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशीतिथिः" ॥ इत्यविद्धालाभनिमित्तविद्धानुज्ञास्तत्युक्तघटिकादशकापेक्षयाभ्यधिकविद्धापि तिथिर्वर्जनीयेत्येवं व्याख्येयं ।

एषैव च ।

दर्शश्च पूर्णमासश्च सम्पूर्णा वर्द्धते यदि ।
द्वितीयेऽह्नि नृपश्रेष्ठ सा भवेत्पक्षवर्द्धनी ॥

इत्याख्यायते ।

अथोन्मीलिन्याद्यष्टभेदनिरूपणं ।

ब्रह्मवैवर्त्ते ।

एकादशीव्रतं सर्वव्रतानां प्रवरं स्मृतं ।
तदहं संप्रवक्ष्यामि समाकर्णय साम्प्रतं ॥
विशोधनमिदं पुंसां शुद्ध्वाद्रेस्तांहसः परं ।
तत्स्वरूपं श्रुतं तीर्थस्नानादप्यधिकं विदुः ॥
एतत्सारमिदं तत्त्वमिदं सत्यमिदं व्रतं ।
प्रायश्चित्तमिदं सम्यग्यदेकादश्युपोषणं ॥
विशेषस्तत्र विज्ञेयो द्वादशीषु द्विजोत्तम ।
भवन्त्यष्टौ परिख्यातास्ताः शृणुष्व यथोदिताः ॥
उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धनी ।
जया च विजया चैव जयन्ती पापनाशिनी ।
द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज ॥
तिथियोगेन जायन्ते चतस्रश्चापरास्तथा ।

नक्षत्रयोगात्प्रबलं पापं प्रशमयन्ति ताः ॥
एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा ।
उन्मीलनी भृगुश्रेष्ठ कथिता पापनाशिनी ॥
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् ।
वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी ॥
अरुणोदय आद्या स्यात् द्वादशी सकलं दिनं ।
अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया ॥
कुञ्जरार्के यदा वृद्धिं प्रयाते पक्षवर्द्धिनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ॥
पुष्य-श्रवण-पुष्याद्य-रोहिणीसंयुताः क्रताः ।
उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक् ॥
ब्रह्मघ्नमपि सा पूर्वा विशोधयति भार्गव ।
वञ्जुलीति द्वितीया सा हत्यायुतविनाशिनी ॥
महापापानि चत्वारि शोषयेत् त्रिस्पृशा क्रता ।
कुरुतेऽशेषकलुषविच्छेदं पक्षवर्द्धनी ॥
जया जयन्तु विजया प्रेतमोचं तथापरा ।
जयन्ती नरकच्छेदमपि दुष्कृतकारिणां ।
अष्टमी तु भृगुश्रेष्ठ महापातकनाशिनी ॥
तावत्पापानि देहेषु दुःसहा यमयातनाः ।
कुर्व्वन्ति प्राणिनां यावन्नैतदुन्मीलनीव्रतं ॥
यदत्र दीयते दानं हूयते चात्र यद्धविः ।
सर्वं तदक्षयं प्राहुरुन्मीलिन्यां महर्षयः ॥

वञ्जुली वासरे यत्र संप्राप्ते गरुड़ध्वजः।
स्वस्थानादवसुधामेत्य कुरुते वाञ्छितं विशां॥
वञ्जुलीविमुखं मर्त्त्यमालोक्य रविनन्दनः।
कुरुते संविदं सार्कं चित्रगुप्तेन हर्षितः॥
अयमेष्यति मन्दात्मा विष्णुव्रतबहिष्कृतः।
वशं ममेति तत् पुण्यं मार्जयाद्य पुराकृतं॥
शिरोर्त्तिर्नितरामेषां मायेऽन्वेव प्रधावते।
यान्ति विष्णुपराः स्वर्गमपि दुष्कृतकारिणः॥
द्वादश्योऽष्टौ समाख्याता याः पुराणविचक्षणैः।
तासामेकापि विहिता हन्ति पापं पुराकृतं।
तदेव विपरीतेन हन्ति पुण्यं पुराकृतं॥
आयाति महता पुण्यप्रसारेण हरेर्द्दिनं।
शुक्लपक्षे कुरुश्रेष्ठ विशेषव्रतसंयुतं॥
तदायातमपि त्यक्तं यदि पुण्यबहिष्कृतैः।
तदेतदमृतं प्राप्तं करादिगलितं क्षणात्॥
एकादशीस्वरूपेण धर्मः साक्षाज्जनार्दनः।
तच्छरीरसमं शाकर्वञ्जुल्युन्मीलिनीव्रतं॥
विहाय वञ्जुलीं पापाः करिष्यन्ति पराक्तिथिं।
न च राजन् विजानन्ति प्राणिनः सौरचक्षुषः॥
स्वयंविनिर्णयान् धिक्तान् नीचान् पण्डितमानिनः।
ये गर्त्तायतनं सर्वप्राणिनां कारयन्त्युत॥
ये कारयन्त्यविबुधाः शास्त्रमुलङ्घ्य हैतुकाः।

प्राणिनस्तत्कृतं पापं तेषां गच्छत्यसंशयं ॥
तेषां निरभिमानैस्तु भूत्वा शास्त्रानुगामिभिः ।
यथावदुपदेष्टव्यं न भाव्यं कलुषाशयैः ॥
सर्वव्रतानाञ्चरणं सर्वतीर्थाभिषेचनं ।
सर्वदानप्रदानञ्च समं स्यादञ्जुलीव्रतं ॥
तत्रान्नदानं विप्राय विधाय श्रद्धयान्वितः ।
प्राप्नोति वञ्जुलो विप्रोऽकल्मषः हरिसन्निधिं ॥
लक्ष्मी-नारायणं देवं सौवर्णं तत्र पूजयेत् ।
यथाशक्त्यन्नदानञ्च दत्त्वा वैकुण्ठमाप्नुयात् ॥
हन्ति त्रिपौरुषं पापं वञ्जुली भक्तितः कृता ।
स एव सर्वशास्त्रार्थः सर्वबुद्धिमतां सतां ॥
हितं सर्वं समीचीनं यद्वञ्जुल्यामुपोषणं ।
उपवासं यथा शक्त्या दानं ब्राह्मणपूजनं ।
विधाय वञ्जुलीञ्चैव पुरुषो याति सद्गतिं ॥

एवमुन्मीलिन्याद्यष्टैकादशीमाहात्म्यं विस्तरेण निरूप्योपसंहृतं ।

एवं समस्तवरधर्मगुणाश्रितं वै
चैकादशीव्रतमिदं किल हेतुयुक्तं ।
शास्त्रान्वितोऽहरिनतस्तु हरिप्रियं यः
शुद्धं पुनः प्रकुरुते लभते स मुक्तिम् ॥

इत्युन्मीलिन्याद्यष्टनिरूपणं ।

अपरे त्वाहुः । परतोदादशीसद्भावे सति सर्वेषां शुद्धद्वादश्या-मुपवासस्तदभावे तु विद्धैकादश्यामिति ।

तथाच श्रुतिः।

एकादशीं दशाविद्धां पक्षद्वौ विवर्जयेत्।
पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुतां।

'लङ्घयेत्' उपवसेदित्यर्थः।

वायुपुराणे।

एकादशी दशाविद्धा द्वादशी च परेऽहनि।
द्वादशी तु तदोपोष्या धर्म-कामार्थसाधनीति॥

तदयुक्तं परतो द्वादश्यभावेऽपि शुद्धद्वादश्यामुपवासविधानात्। तथाच कूर्म-पद्मपुराणयोः।

एकादशी दशाविद्धा परतो द्वादशी न चेत्।
तत्रोपोष्या द्वादशी तु त्रयोदश्यान्तु पारणम्॥

अन्यान्यप्येवंविषयाणि वचनानि प्राग्दर्शितानि। न च परयुक्तैकादशीविषयमिदं वचनजातं, "तदोपोष्या द्वादशीति वचनात्। तथा हि द्वितीयैकादशी ग्राह्येति वक्तुमुचितं न तु द्वादशीति। केचित्तु सन्न्यासिविषयमिदं वचनजातमित्याहुः, तन्मन्दं प्रमाणाभावात्। न च "शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। पारणन्तु त्रयोदश्यामिति वचनं प्रमाणं। न ह्येतेन वचनेन शुद्धद्वादश्युपवासः सन्न्यासिनां विधीयते, किन्तु मुमुक्षूणां। न च सन्न्यासिनामेव मुमुक्षतेति नियमः। किञ्च क्षत्त्रियादेरपि शुद्धद्वादश्युपवासो विधीयते "क्षत्त्रियैर्वैश्यैस्तथा शूद्रैः किमन्यच्छ्रोतुमर्हसीति वचनेन, तत्र न शूद्रादेः सन्न्यासः सम्भवति। किञ्च यतीनामपि विद्धैकादश्युपवासो विधीयते।

एकादशी दशाविद्धा परतोऽपि न वर्द्धते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

इति मत्स्यपुराणवचनेन ।

अन्ये त्वरुणोदयविद्धैकादश्युपवासविषयः, तदूर्ध्वविद्धविषयास्त-न्निषेधाः, शुद्धद्वादश्युपवासविधयश्चेत्याहुः । तन्मन्दं । अरुणोदय-विद्धैकादश्युपवासनिषेधानां प्रागुदाहृतत्वात् ।

अन्ये तु यदा विद्धैकादशीद्वादश्याश्च श्रवणर्चं भवति तदा विद्धैकादश्युपवासनिषेधाः शुद्धद्वादश्युपवासविधयश्च । विद्धैकादश्युप-वासविधयस्तु एकादश्यन्तरविषया इत्याहुः । एकादश्यामविद्धायां श्रवणे प्राप्ते शुद्धद्वादश्युपवासविधानात् । तथाच नारदीयपुराणे ।

एकादश्यामविद्धायां सम्प्राप्ते श्रवणे तथा ।
उपोष्या द्वादशी पुण्या उभयोर्दैवतं हरिः ॥

स्कन्दपुराणे ।

शास्त्रवादेऽप्युपस्थिते इति चतुर्थःपादः पद्यने ।

कूर्मपुराणे ।

एकादशी दशाविद्धा श्रवणश्च भवेत्तथा ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

किञ्चैवंविधैकादश्युपवासप्रकरणपाठोऽनर्थकः स्यात् ।

अपरे तु विद्धैकादश्युपवासोऽदिनत्रयविषयः अन्यत्र शुद्धद्वाद-श्युपवासोऽदिनत्रयविषयः । अन्यत्र शुद्धद्वादश्यां दिनत्रयस्पृते देवेनो-पोष्या "दशमीयुतेति वचनादित्याहुः । तदप्ययुक्तं एकादशीदिन त्रयेऽपि शुद्धद्वादश्यामुपवासविधानस्य दर्शितत्वात् ।

अन्ये तु "विद्धाप्येकादशीत्यादिवचनजातं परतो द्वादश्यभावे सति शुद्धैकादशीप्रशंसार्थं । परतोद्वादशी न चेद्विद्धापि ग्राह्या किमुताविद्धापि। तथाच मूलान्तरकल्पनाभावेऽपि विद्धैकादश्युपवासनिषेधवचसामसङ्कोचश्च भवेत् विष्णुरहस्याद्युपक्रमोपसंहारपर्य्यालोचनया चायमेवार्थः प्रतीयत इत्याहुः। तत्र "दिनत्रयस्पृते देवीतिवचनं कथमिति चिन्त्यं।

केचित्तु परतोद्वादशीसद्भावे सति द्वितीयैकादश्युपवासः सर्वेषां नान्यथेत्याहुः।

तथाच भविष्यत्पुराणे।

तृतीयेऽहनि सम्प्राप्ते द्वादशी यदि दृश्यते।
द्वितीयैकादशीं कुर्य्यात् प्रथमान्तु विवर्जयेत्॥
द्वादश्येकादशी युक्ता द्वादशी परतो यदि।
द्वादशीमिश्रितोपोष्या तिथिरेकादशी तदा॥
द्वादश्येकादशी यत्र द्वादशी परतो भवेत्।
तत्रोपोष्या द्वितीया तु द्वादश्याञ्चैव पारणमिति॥

तदयुक्तं।

परतो द्वादश्यभावे द्वितीयैकादश्युपवासविधानात्।

तथाच ब्रह्म-वाराह-स्कन्दपुराणेषु।

दशमीशेषसंयुक्ता यदि वृद्धिमती भवेत्।
तदोपोष्या द्वितीया स्यात् त्रयोदश्यान्तु पारणम्॥

स्कन्दपुराणे।

द्वादश्येकादशी यत्र संयुता[१] मुनिसत्तम।

(१) सङ्गतेति क०।

तामुपोष्य नरः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

कूर्मपुराणे ।

एकादशी कलाप्येका परतो द्वादशी न चेत् ।

तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणमिति ॥

न च परतोद्वादशीसद्भावविषयाण्येतानि वचनानि "त्रयोदश्यान्तु पारणमिति वचनात्, तदा द्वादश्यां पारणमिति वाच्यं न तु त्रयोदश्यामिति ।

केचित् सन्न्यासिविषयमिदं वचनजातं ।

यदा तु दशमीविद्धा द्वादशीमपि संस्पृशेत् ।

एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः ॥

एकादशी दशाविद्धा परतोऽपि भवेद्यदि ।

तदोपोष्या द्वितीया तु विष्णुसायुज्यमिच्छता ॥

इति वचनादित्याहुः । तन्मन्दं, न हीदं वचनद्वयं सन्न्यासिनां द्वितीयैकादश्युपवासमाह, किन्तु मुमुक्षूणां । न च सन्न्यासिनामेव मुमुक्षा, गृहस्थादेरपि तत्सम्भवात् । ननु च यानि त्रयोदशीपारण-पराणि तेष्वेव "तत्र क्रतुशतं पुण्यं इत्यादिफलश्रवणं, तानि काम्योपवासाभिप्रायाणि, विद्धोपवासविधिपराणि तु नित्योप-वासविषयाणीति व्यवस्था किं न स्यान्नैवं ।

यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयं ।

तत्र क्रतुशतं पुण्यं द्वादशीपारणं भवेत् ॥

द्वादश्येकादशी यत्र द्वादशी परतोऽपि वा ।

द्वादशीपारणं कुर्य्यात् क्रतुकोटिफलं लभेत् ॥

इति द्वादशीपारणेऽपि फलश्रवणाविशेषात्।

किञ्च।

सर्व्वैकादशी कार्य्या द्वादशीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यं हि परणम्।
पारणन्तु त्रयोदश्यां निष्कामाणां विमुक्तिदम्॥

इत्यादिषु त्रयोदशीपारणस्यापि नित्यताश्रवणाच्च। अतोनेयं फलश्रुतिः, अपि त्वर्थवाद इति मन्तव्यं।

अपरे त्वाहुः।

विद्धैकादश्या निर्णयं वक्तुं कीदृग्वेध इति तावद्वक्तव्यम्।

अर्द्धरात्रात्परा यत्र एकादश्यान्तु लभ्यते।
तत्रोपवासनं कर्त्तुं न चेच्छेद्दशमीकला॥

इति स्मृत्यालोचनयार्द्धरात्रादूर्ध्वं दशमीस्पर्शस्य वेधत्वावगमात्।

आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता।
एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता॥

इति स्मृतेः सूर्य्योदयात् प्राग्घटिकाचतुष्टये दशमीस्पर्शस्य वेधत्वावगमात् "सूर्य्योदयस्पृशा ह्येषा दशम्या गर्हिता सदेति स्मृत्यालोचनया च सूर्य्योदये दशमीस्पर्शस्य वेधत्वावगमात्, सूर्य्योदयात् प्राग्दशमीस्पर्शस्य वेधत्वे तदूर्ध्वकालीनस्य सुतरां वेधत्वसिद्धेः "सूर्य्योदयस्पृशा ह्येषेति वाक्यानर्थक्यप्रसङ्गाद्वेधकत्वे वा तद्वेधकत्वाभिधायकवाक्यविरोधप्रसङ्गात्।

अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकात्रयं।
अतिवेधोद्विघटिकः प्रभासन्दर्शनाद्रवेः।

महावेधोऽपि तत्रैव दृश्यतेऽर्कोन दृश्यते ॥
या तिथिः स्पृश्यते राजन् प्रातर्वल्लावलोकिनी ।
स वेध इति विज्ञेयो योगः सूर्योदये स्मृतः ॥

इति चातुर्विध्यस्यत्यालोचनाच्च विषयतारतम्याद्दोषतारतम्यमाभाति । तदयुक्तं कर्माङ्गकालदोषस्य पुरुषे दोषानापादकत्वात् कर्मणश्च स्वसाध्यफलसाधकत्वातिरिक्तदोषाभावादल्पवेधेऽपि च कर्मवैगुण्यात् फलासिद्धेः कर्मदोषतारतम्यायोगात् ।

दशमीशेषसंयुक्तां न तु कुर्य्यात् कथञ्चन ।
जम्भस्येयं पुरा दत्ता दशम्याः शेषसंयुता ॥
उपोषिता प्रमादेन प्रायश्चित्तञ्चरेत् द्विजः ।
प्रायश्चित्तमकुर्वाणस्तत्फलेन विनाशितः ।
स गच्छत्यन्धतामिस्रं नरकं भृशदारुणम् ॥
अज्ञानात् यदि वा मोहात् कुर्व्वन्नेकादशीं नरः ।
दशमीशेषसंयुक्तां प्रायश्चित्तमिदं भवेत् ॥
तत्र कृच्छ्रं नरश्चीर्त्वा गाञ्च दद्यात् सवत्सिकां ।
सुवर्णस्यार्द्धकं देयं तिलद्रोणसमन्वितम् ॥

इति विहितेन प्रायश्चित्तेन परिहृते वैगुण्ये वक्रविधेऽपि समयफलसिद्धिः ।

यातुधानव्रतं योगे महावेधन्तु वाष्कले ।
जम्भासुरस्यातिवेधे मोहिनी शिखवेधनी ॥

इति जम्भासुरभागितया निन्दितातिवेधमात्रविषयत्वेनास्य प्रायश्चित्तस्य वेध-महावेधादौ तदनुसारेण प्रायश्चित्ताल्पत्व-महत्त्वस्या-

कल्पत्वात् प्रायश्चित्तवैषम्येण वैगुण्याख्यकर्मदोषवैषम्यावगतेस्तारतम्यं युक्तमिति चेत्। न।

दशमीशेषसंयुक्ता न तु कार्य्या कथञ्चन।

इति सामान्यविषयनिषेधानुसारात् "जम्भस्येयं पुरा दत्तेति निन्दार्थवादस्यजम्भग्रहणस्योपलक्षणत्वावगमे प्रायश्चित्तविषयव्यवस्थापनाशक्तेः।

प्रायश्चित्तन्तु कर्त्तव्यं शुद्ध्यर्थन्तु व्रतस्य वै।
निश्छिद्रं जायते ह्येतद्धर्मसन्तानमेव च॥
ब्राह्मणान् भोजयेत् त्रिंशद्दाशु दद्यात्सवत्सिकां।
सुवर्णस्यार्द्धकं देयं तिलद्रोणमथापि वा॥

इति स्मृत्यन्तरे च विषयविशेषाप्रतीतेः स्मृतस्य च प्रायश्चित्तस्य विशिष्टविषयकल्पनेऽपि विषयान्तरेऽपि तदेव प्रायश्चित्तमन्यदेति निश्चेतुमशक्यत्वात् वैगुण्यवैषम्यकल्पनया प्रायश्चित्तवैषम्यकल्पना प्रायश्चित्तवैषम्यकल्पनया च वैगुण्यवैषम्यकल्पनेत्यन्योन्याश्रयतापत्ते-र्न प्रायश्चित्ततारतम्याद्दोषतारतम्यकल्पनं युक्तं। वेधातिवेधमहावेधयोगाख्यचातुर्विध्यस्मृतेश्च। "एतानि वै दश यज्ञायुधानीति यज्ञायुधव्यपदेशस्य "स एष यज्ञायुधीयं यजमानोऽञ्जसा स्वर्गलोकं यातीत्यर्थवादौपयिकत्ववत् "यातुधानव्रतं योग इत्यादिनिन्दार्थवादौपयिकत्वसम्भवाच्च तद्बलादपि दोषतारतम्यकल्पना युक्ता, तस्मात्सर्ववाक्योपपत्त्यर्थमेवं वक्तव्यं, "सूर्य्योदयस्पृशा ह्येषेत्यत्र सदेति श्रवणात् सूर्य्योदये दशमीस्पर्शस्य नित्ये काम्ये वैकादशीव्रते गर्हितत्वप्रतीतेः "दशमीशेषसंयुक्तेत्यत्रापि संयुक्तशब्दश्रवणात् "योगः सूर्य्योदये स्मृत-

इति योगव्यपदेशस्य सूर्योदये दशमीस्पर्शस्य निषधप्रतीतेः।

दशम्याः शान्तमादाय यदोदेति दिवाकरः।
तेन स्पृष्टं हरिदिनन्दत्तं जम्भासुरस्य तु॥

इतिस्मृत्यन्तरे च सूर्योदये दशमीस्पर्शस्य जम्भासुरभागित्वेन निन्दनात् "जम्भस्येयं पुरा दत्तेति निन्दाया अपि तद्विषयत्वापत्तेः सूर्योदये दशमीस्पर्शस्यैव निषिद्धत्वादेधोऽवसीयते। ततः प्राचीनानान्तु स्पर्शानां मध्ये।

अरुणोदयकाले तु दशमी यदि दृश्यते।
पापमूलं सदा ज्ञेयं एकादश्युपवासिनाम्॥

इति निन्दाश्रवणेऽप्यरुणोदये तु दशमीस्पर्शस्य।

अरुणोदये तु दशमीगन्धमात्रं भवेद्यदि।
द्रष्टव्यं तत् प्रयत्नेन वर्जनीयं नराधिप॥

इति निषेधश्रवणेऽपि च।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः।
वैष्णवेन तु कर्त्तव्यं तद्दिनैकादशीव्रतं॥

इतिस्मृतेर्निषेधस्य विष्णुसायुज्यकामाख्यवैष्णवविषयत्वावगमात्।

उदयात् प्राक्त्रिघटिकाव्यापिन्येकादशी यदा।
सन्दिग्धैकादशी नाम वर्जयेद्धर्मकाङ्क्षिभिः॥

इति च।

वीरः शक्तिमतां श्रेष्ठो धर्माधर्मविदुत्तमः।

इति धर्मशब्दस्य "विष्णुनामसुपाठाद्यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति मन्त्रलिङ्गाद्धर्मशब्दवाच्यतयावगतेन यज्ञेन

नैकादशीं नाम वर्जयेद्धर्मवृद्धये इत्येतदुत्तरस्य च "पुत्त-पौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेदित्यस्य "सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिरित्येतदुत्तरस्य च "पुत्रपौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेदित्यस्यारुणोदयादिविद्धैकादशीविषये फलान्तरकामस्य द्वादश्युपवासविधानार्थत्वात् न तदंशेनारुणोदयादिविद्धैकादशीनिषेधानां फलान्तरकामविषयत्वं शङ्कनीयं। "पापमूलं सदा ज्ञेयमित्यस्या निन्दामात्रत्वात्तच्छब्दवाच्यस्य विष्णोरियमाज्ञेत्यपि च व्याख्यातुं शक्यत्वात्तदाश्रवणमात्रेणारुणोदयकाले दशमीस्पर्शनिषेधस्य सर्वविषयत्वापत्तिः। "अरुणोदयवेलायां विद्धा काचिदुपोषिता। तस्याः पुत्त्रशतं नष्टं तस्मात्तां परिवर्जयेदित्यपि निन्दामात्रं।"सूर्य्योदयस्पृशा ह्येषा दशमी गर्हिता सदेत्यस्य तु निषेधार्थत्वात् "अविद्धानि निषिद्धैश्चेत् न लभ्यन्ते दिनानि तु। मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः"॥ इत्यादिविरोधापत्तेरेकादश्यां द्वादश्यां परतो वा सत्ते चेत्येवं सदाशब्दव्याख्यानयोगात्सर्वनित्य-काम्यैकादश्युपवासविषयत्वव्याख्यानयोगात्सर्वनित्य-काम्यैकादश्युपवासविषयत्वव्याख्यैव युक्ता, "उदयादूर्ध्वविद्धा तु दशम्येकादशी यदा। दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासन इति स्मृत्यन्तरदर्शनात् सूर्य्योदयोत्तरकालस्पर्शिनी सूर्य्योदयस्पृशाशब्देनोक्तेति गम्यते। तस्मात् सूर्य्योदयोत्तरकालदशमीस्पर्श एव सर्वविषयोवेधः, अरुणोदयघटिकाद्वयार्द्धसूर्य्योदयकालास्तु दशमीस्पर्शा यथाक्रमं विष्णुसायुज्यमुक्तिकामैकादश्युपवासविषया एवेति सिद्धं। अर्द्धरात्रात्परा दशमीकला लभ्यते तत्रोपवासं नारभेतेत्येवं प्रथमारम्भविषयतया व्याख्येयं तदेतदयुक्तं। तत्र यत्तावदुक्तं कर्माङ्गकालदोषस्य पुरुषदोषानापादकत्वादिति तद-

युक्तं कर्माङ्गकालनिषिद्धकाले कर्मानुष्ठाने सर्ववाक्येष्वपि पुरुषदोषस्यैवाभिधानात् बाधकाभावाच्च तत्त्यागानुपपत्तेः। यदपि वैष्णवशब्देन विष्णुसायुज्यकामोऽभिधीयत इत्युक्तं तदपि न विष्णुप्रीतिकामविष्णुभक्तानामेकादश्युपवासिनामप्यभिधानात्। धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलशब्दानां लोकप्रसिद्धार्थहानमप्ययुक्तं, वेधतारतम्यं च पुरुषदोषतारतम्यादुपपद्यते, अरुणोदयविद्धैकादशीनिषेधानां फलान्तरकामविषयत्वमप्येकवाक्यतावशादवगम्यते, "पापमूलं सदा ज्ञेयमित्यत्र सदाशब्दस्य "सूर्योदयस्पृशा ह्येषा दशमी गर्हिता सदेति च विद्धानुग्रहव्यतिरिक्तविषयत्वोपपत्तेः न सच्छब्दस्य विष्णुपरत्वेन क्लिष्टकल्पनया व्याख्यानं युक्तं तस्माद्यथोक्तमेव साधीयः ।

अथैकादशीद्वादश्युपवासकालनिर्णयः ।

यदैकादशीमिश्रायां द्वादश्यामेकादशीव्रतं प्राप्नोति द्वादशीव्रतञ्च तदैकेनोपवासेनैकादश्युपवासो द्वादश्युपवासश्च सिध्यति । यदा त्वेकादश्यां पृथगुपवासः सम्पूर्णत्वेन प्राप्नोति द्वादश्यां च पृथक् तदोपवासद्वयं कर्त्तव्यं "एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत्। न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिः"॥ इतिविधानात्। "असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरमिति समाप्तिश्च पारणेन। तदभावे उपवासद्वयेऽपि क्रियमाणे पूर्वव्रतस्यासमाप्तेर्विधिलोपः प्राप्नोति । सोऽप्येकदैवतत्वेन परिहृतोभवत्येव। "एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयं"॥ एतदुपवासद्वयासमर्थं प्रत्युच्यते। यदैकस्मिन्नप्युपवासे असमर्थस्यैकभक्तादि विहितं तदोपवासद्वयासमर्थं प्रति किमु वक्तव्यं। एकादश्युपवासव्रतं नित्यं सर्वेषां सर्वदा हितं तथा

"विष्णुर्वै यज्ञ इति विष्णोः संस्तवाद्धर्मशब्दवाच्यत्वावगतेः धर्मकाङ्क्षिशब्दस्य विष्णुसायुज्यकामवाचित्वावगमेन सूर्य्योदयात् प्राक् घटिकात्रयव्याप्येकादश्युपवासवर्जनं विष्णुसायुज्यकामविषयमेवावसीयते। "चतस्रो घटिकाः प्रातररुणोदय उच्यत इति घटिकाचतुष्टयस्य "अरुणोदयवेधः स्यात्सार्द्धञ्च घटिकात्रयमिति च सार्द्धघटिकात्रयस्यारुणोदयकाललक्षणेऽपि।

निशिप्रान्ते तु यामार्द्धे देववादित्रवादने।
सारस्वतानध्ययने चारुणोदय उच्यते॥

इति रात्र्यन्त्याष्टमभागे चारुणोदयकालस्य स्मृतेर्मकरसङ्क्रान्तौ सप्तविंशतिघटिकामात्रत्वाद्रात्रेस्तदष्टमभागेन सार्द्धघटिकात्रयस्यापि व्याप्यशक्तेः किञ्चिदधिकघटिकात्रयव्यापिन्या अपि चैकादश्याः त्रिघटिकाव्यापिनीत्वव्यपदेशाविरोधात् घटिकात्रयव्याप्युक्त्यारुणोदयकालीनदशमीस्पर्शलक्षणोपपत्तिः, सार्द्धघटिकात्रयोक्तिः अष्टाविंशतिघटिकामात्ररात्रिविषया महत्तरास्तु रात्रीर्विषयीकृत्य चतस्रोघटिका इत्युक्तं। यदा चतसृष्वपि घटिकास्वरुणोदये सार्द्धघटिकात्रयात् प्राग्दशमीस्पर्शस्य वेधकत्वाभावोक्त्यर्थं सार्द्धघटिकात्रयोक्तिः,। सूर्य्योदयात् प्राक् घटिकाद्वये दशमीस्पर्शवर्जनन्तु।

उदयात् प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा।
संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये॥

इति धर्मवृद्धिशब्देन शुद्धोपयिकायाः सकलशुद्धेः "यदीच्छेद्विपुलान् भोगान्मुक्तिञ्चात्यन्तदुर्लभां"। इतिशब्दलक्षिताया धर्मातिशयात्मकतया विवक्षितत्वात्काम विषयम्।

आदित्योदयवेलायामारभ्य षष्टिनाड़िकाः ।
सम्पूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥

इत्येतत् "महावेधोऽपि तत्रैव दृश्यतेऽर्कौ न दृश्यत इति स्मृत्यन्तरालोचनया,

रविचक्रार्द्धमात्रापि दशमी श्रूयते यदि ।
तदापि द्वादशी ग्राह्या त्रयोदश्यान्तु पारणं ॥

इति स्मृत्यन्तरालोचनयाप्यर्द्धादित्योदये दशमीस्पर्शवर्जनोक्त्यर्थं "पश्वादीनि च धर्मस्य फलानीति व्यवस्थितमिति मीमांसावार्त्तिकाभिधानात् धर्मफलशब्दस्य "यदीच्छेद्विपुलान् भोगान् इत्येकादश्युपवासाख्यधर्मफलतया स्मृतिभोगवाचित्वावगतेः तत्तत्कामविषयं,धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलशब्दानां मुग्धलोकप्रसिद्धार्थत्वाभ्युपगमे अरुणोदयवेधप्रारब्धधर्मासमाप्तिघटिकाद्वयवेधे समाप्तस्यापि धर्मस्यातिशयसिद्धिरुद्यत्सूर्यौदयवेधेऽतिशयितस्यापि धर्मस्य प्रतिबन्धादिवशात् फलानवाप्तिरित्यापत्तेर्विपरीतवेधतारतम्यप्रसङ्गात् प्रथमोवेधो द्वितीयोऽतिवेधः तृतीयोमहावेध इति व्यपदेशा निरालम्बनाः स्युः, समाप्तस्यापि कर्मणः श्रेयस्करत्वाख्यधर्मत्वासिद्धावपि धर्मकाङ्क्षिशब्देन विवक्षितायां धर्मफलावाप्तिशब्देनापि तस्या एव विवक्षाप्रतीतेर्महावेधव्यवस्था निरालम्बना स्यादतोऽस्मत्कृतैव धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलाप्तिशब्दव्याख्या युक्ता सूर्यौदयोत्तरकालदशमीस्पर्शनिषेधवत्तत्कालदशमीस्पर्शनिषेधानामपि सर्वविषयत्वाभ्युपगमे तु धर्मकाङ्क्षादिशब्दानर्थक्यापत्तिः। "सन्दिग्धैकादशी नाम वर्ज्या स्याद्धर्मकाङ्क्षिभिरित्येतदुत्तरस्य "पुत्त्रराज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेदित्यस्य "संयु-

द्वादश्युपवासव्रतं काम्यमन्यदेव सर्व्वेषां सर्व्वदा विहितं, मार्कण्डेय-प्रद्युम्नसंवादे मार्कण्डेयेन पूर्व्वमेकादश्यामुपवासो द्वादश्यां पारणमित्युक्तानन्तरं द्वादश्यामुपवासः त्रयोदश्यां पारणमित्युक्तं। तद्विरुद्धं वचनद्वयं श्रुत्वेन्द्रप्रद्युम्न उवाच ।

नोपोष्या द्वादशी राजन् पुराणे परिकीर्त्तिता ।
त्वयापि मुनिशार्दूल प्रागुक्तं तच्छृणुष्व मे ॥
पारणे व्याहृता ब्रह्मन् द्वादशी केशवप्रिया ।
उपोष्या व्याहृता ब्रह्मन् त्वया ह्येकादशी शुभा ॥
द्वादश्यां पारणं कार्य्यमेकादश्यां हि लङ्घनम् ।
पुराणविहिते मार्गे निषिद्धस्त्वरसे कथम् ॥

इति पृष्टो मार्कण्डेय उवाच ।

शृणु भूपाल सकलं यत् पृष्टं साधुना त्वया ।
जगद्विनाशितं दुष्टैर्हैतुवादकथान्वितैः ॥
द्वादश्या निर्णये[१] भूप मूढमत्र जगत्त्रयम् ।
अत्र मूढा महीपाल प्रायशो ये नराः पुरा ॥
ते नष्टास्तेषु न स्थैर्य्यं रहस्यं याति भूमिप ।
समलेष्वत्र देहेषु पीतश्चैवौषधं यथा ॥
ये शुद्धास्तेषु तद्याति स्थिरत्वं धर्मसंग्रहात् ।
त्रिफला रिक्तदेहानां औषधं स्थिरतां व्रजेत् ॥
चतुर्दशीमुपोषन्ति शिवभक्ता नराधिप ।
न तेषां गमनं भूप नरके दृश्यते क्वचित् ॥

(१) दशम्या निर्णय इति ख० ।

अपरे गोपतौ केचिद्भक्तिं कुर्व्वन्ति ये नराः ।
सप्तमीं समुपोषन्ति भक्तियुक्तास्तथैव च ।
न चापि कुत्सितं तेषां मया दृष्टं नराधिप ॥
पौर्णमास्युपवासेन ब्रह्मलोकं गता नृप ।
अपरे त्वष्टमीं सन्तः शिवभक्तिसमाश्रयाः ॥
कलिपङ्कं परित्यज्य नराश्चैव नरोत्तम ।
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः ।
तत्कथं द्वादशी भूप नोपोष्या क्रियते जनैः ॥
एषा निःश्रेयसी भूप फलभोगविवर्जिता ।
मोक्षात्मिका पुरा प्रोक्ता द्वादशी प्रवरा तिथिः ॥
एकादशी शरीरन्तु पुरुषो द्वादशी स्मृता ।
द्वादश्यामुपवासेन सिद्धा भूप सहस्रशः ॥
चक्रवर्त्तित्वमतुलं सम्प्राप्ता अवनीश्वराः ।
चतुर्द्दशैते सञ्जाता बलिनश्चक्रवर्त्तिनः ॥
विष्ण्वंशास्ते महावीर्या दुष्टदैत्यनिवर्हणाः ।
द्वादश्यामुपवासेन सिद्धा भूप सहस्रशः ।
चक्रवर्त्तित्वमतुलं सम्प्राप्ता अचलां श्रियं ॥
उपोष्य द्वादशीं शुद्धां यावज्जीवव्रतान्विताः ।
चक्रवर्त्तित्वमापन्ना भुक्ता भोगान् सुखानि ते ॥
कुवलाश्वो भवान् गाधिर्हरिश्चन्द्रोनलः पृथुः ।
मरुतो भरतश्चैव कार्त्तवीर्य्यश्च हैहयः ॥
मान्धाता सगरो रामः ककुत्स्थो नहुषस्तथा ।

उपोष्य द्वादशीं पुण्यां अपराह्न विवर्ज्य च।
भुक्त्वा स्वर्गसुखान्येते चक्रवर्त्तित्वमागताः॥
जनकानां महीपाल द्वादश्यां समुपोषणे।
सप्तभिः सप्तभिर्युक्ताः संसिद्धिं परमां गताः॥
पुरुकुत्सो महीपालो द्वादश्यां समुपोषणे।
सिद्धिङ्गतः परित्यज्य कर्मबन्धं दुरासदम्॥
मान्धाता यौवनाश्वश्च द्वादश्यां समुपोषणे।
संग्रामे निधनं प्राप्य संप्राप्तः परमं पदम्॥
शाकुन्तलो महीपाल दौष्यन्तिरपराजितः।
द्वादश्यामुपवासेन गतस्तद्वैष्णवं पदम्॥
वैन्यः पुरूरवा भूप पालयित्वा धरातलम्।
धरणीधरमभ्यर्च्च द्वादशीषु सदा पुनः।
गतस्तु वैष्णवं लोकं दाहप्रलयवर्जितम्॥
एते राजर्षयोभूप द्वादश्यां समुपोषणे।
सिद्धिं परमिकां प्राप्ता ये द्विजास्तान् शृणुष्व मे॥
याज्ञवल्क्यस्तु रैभ्यस्तु माण्डव्यः कौशिकोमुनिः।
भरद्वाजस्तथा कण्वः कुम्भयोनिस्तपोनिधिः॥
अष्टाशीतिसहस्राणां ऋषीणामूर्ध्वरेतसाम्।
प्रयान्ति स्पन्दनाद्ये तु तिमिरारेर्जनाधिप॥
ते सर्वे परमां सिद्धिं द्वादश्यां समुपोषणे।
मया सह गता भूप कथन्ते संशयोभवेत्॥
द्वादशीपारणं राजन् हरिगुह्यं प्रकीर्त्तितम्।

निरापराधं लोकेऽस्मिन् शुभं वैष्णववल्लभम् ॥
तस्मात् भूप न सन्देहः कर्त्तव्यो द्वादशीं प्रति ।
विशेषफलदा प्रोक्ता द्वादशी पापनाशिनी ॥

इत्युपसंहारेऽभिहितं, अतोऽन्यदेवैकादश्युपवासव्रतात् द्वादश्युपवासव्रतमस्तीति सर्वमनवद्यं ।

अन्ये त्वाहुः ।

शुक्ले कृष्णे द्विजश्रेष्ठ द्वादशी-श्रवणान्विते ।
द्वादश्यामुपवासस्तु त्रयोदश्यान्तु पारणम् ॥

इत्यादिस्मृतिभिः श्रवणान्वितद्वादश्युपवासविधानेऽपि तस्यैकादश्युपवासकार्य्यापत्तिप्रमाणाभावात् ।

पूर्व्वमेव हि व्याख्याता द्वादशी श्रवणान्विता ।
उपोष्यैकादशीं पश्चात् द्वादश्यामुपवासयेत् ॥

इति स्मृतेरेकादश्यामप्युपवासः कार्य्यः । तेन श्रवणद्वादश्यामेवोभयत्रोपवास इति । तदसत् । श्रवणद्वादशीव्यतिरेकेणापि द्वादश्यां यावज्जीविकाम्योपवासविधानात् तस्माद्यथोक्तमेवाश्रयणीयं ।

इत्येकादशी-द्वादश्युपवासनिर्णयः ।

---

## अथैकादशीव्रते नक्तादिकालनिर्णयः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

पूर्णाविद्धां पलार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
यदीच्छेदात्मसन्तानं चतुर्षु नियमेष्वपि ॥

नोपोषितव्यं नक्तञ्च नैकभक्तमयाचितं ।
नन्दायां पूर्णविद्धायां क्रियैतैर्य्यर्म्मो हता ॥
एकादशीयुता शस्ता द्वादश्याः समुपोषणे ।
नक्ते वायाचिते नित्यमेकभक्ते तथार्चने ॥
नक्तं वायाचितं तात नैकभक्तमुपाहरेत् ।
द्वादशीमहितं दानमनर्थं हरिवासरे ॥
इत्येकादशीव्रते नक्तादिकालनिर्णयः ।

---

## अथैकादशीव्रताङ्गपारणकालनिर्णयः ।

तत्र कूर्म्मपुराणे ।

एकादश्यामुपोष्यैवं द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्य्यात् द्वादशद्वादशीक्षयात् ॥

विष्णुरहस्ये ।

पारणन्तु न कर्त्तव्यमुपोष्यैकादशीमिह ।
त्रयोदश्यां नरैर्नित्यं धर्म्मवृद्धिमभीप्सुभिः ॥
दशम्यनुगता हन्ति द्वादशद्वादशीफलम् ।
धर्म्मापत्य-धनायूंषि त्रयोदश्यान्तु पारणे ॥

स्कन्दपुराणेऽपि ।

एकादशी यदा दृश्या द्वादशीलवमात्रिका ।
द्वादशद्वादशीर्हन्ति त्रयोदश्यान्तु पारणे ॥
यदा भवति चाल्पा तु द्वादशी पारणे दिने ।
उषःकाले द्वयं कुर्य्यात् प्रातर्म्मध्याह्निकं तदा ॥

नारदीयपुराणे ।

अन्यायामथ राजेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्य्या दान-होमादिसंयुता ॥
त्रयोदश्यान्तु शुद्धायां पारणे पृथिवीफलं ।
सर्वयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयं ॥
एतस्मात् कारणाद्विप्राः प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तामन्यां दृष्ट्वैव द्वादशीं ॥
महाहानिकरा ह्येषा द्वादशी लङ्घिता नृणां ।
करोति धर्महरणं अस्नातेव सरस्वती ॥

कूर्म्मपुराणे ।

कलादयं त्रयं वापि द्वादशीं न त्वतिक्रमेत् ।
अतिक्रान्ता द्वादशी तु हन्ति पुण्यं पुराकृतम् ॥

भविष्यत्पुराणे ।

यो द्वादशीमतिक्रम्य पारणं कुरुते नरः ।
द्वादशाब्दव्रतं तस्य तत्क्षणादेव नश्यति ॥

स्कन्दपुराणे ।

द्वादशीं यस्त्वतिक्रम्य त्रयोदश्यान्तु पारणम् ।
करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु ॥

देवीरहस्ये ।

द्वादशीं समतिक्रम्य पारणं यः करोति हि ।
स्नान-दानादिकं सर्व्वं निष्फलं तस्य जायते ॥

न च ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु ॥

इति देवलवचनात् द्वादश्यतिक्रमे न दोष इति शङ्कनीयम्। यत आह नारदपुराणे वसिष्ठः ।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति ।

यस्मिन् काले पारणं मरणं वा तत्र तात्कालिक्येव तिथिः न पुनः सा तिथिः सकला ज्ञेयेत्येतद्भवतीत्यर्थः। यत्र पुनस्त्रयोदश्यां पारणकालपर्य्याप्ता कियन्मात्रैव द्वादशी तत्र पद्मपुराणोक्तम् ।

त्रयोदश्यां यदा राजन् द्वादश्यास्तु कला भवेत् ।
सा तिथिः सकला चेति वशिष्ठः प्राह धर्म्मवित् ॥

स्कन्दपुराणे ।

कलाद्वयं त्रयं वापि द्वादश्याः समतिक्रमेत् ।
एकादशीमुपोषित्वा तत्र धर्म्मफलं व्रजेत् ॥

तथा ।

द्वादशीतिथिशेषः स्यात् परतश्च त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

एतदपि पारणपर्य्याप्तद्वादशीविषयं। एवं च यानि त्रयोदशी-पारणे निषेधपराणि द्वादशीपारणनियमविधिपराणि वा तानि सर्व्वाणि त्रयोदश्यां द्वादशीसम्भवविषयाणि ।

तथाच पद्मपुराणे ।

यदि किञ्चित् त्रयोदश्यां द्वादशी चोपलभ्यते ।
द्वादश्यां पारणे यत्र वर्ज्जयित्वा त्रयोदशीम् ॥

महाहानिकरा ह्येषा द्वादशी लङ्घिता नरैः ।
करोति धर्महरणमस्नातेव सरस्वती ॥
अथवा द्वादशी न स्यात् स्वल्पापि रविसंयुता ।
पारितव्यं त्रयोदश्यां महापुण्यविवृद्धये ॥

अन्यासु गङ्गाद्यासु सरित्सूत्तीर्य्य परस्मिन् तीरे स्नातव्यं सरस्वत्यां तु प्रथमं स्नात्वा परं पारं गन्तव्यं, 'अस्नाता' कृतं स्नानं यस्यां सा स्नाता क्तोऽधिकरणे, न स्नाता 'अस्नाता' सरस्वती लङ्घ्यमाना यथा धर्महरणं करोति एवं पारणलङ्घिता अतिक्रामिता द्वादशी धर्महरणं करोति ।

पुराणात् ।

एकादशी द्वादशी च तत्रोपोष्या कृतं फलम् ।
मुहूर्त्तं द्वादशीं प्राप्य त्रयोदश्यां न पारणम् ॥

यानि पुनः ।

कलाकाष्ठामुहूर्त्तं तु यदि चेन्न परेऽहनि ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

इति त्रयोदश्यां द्वादश्यसम्भवमनूद्य पारणनिषेधपराणि तानि ।

विद्धाप्येकादशी याह्या परतो द्वादशी न चेत् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणं ॥

इत्यादिभिः समानार्थानीत्यनवद्यं ।

अन्ये त्वेवं त्रयोदशीपारणनिन्दा-प्रशंसयोर्व्यवस्थामाहुः, गृहस्थानां त्रयोदशीपारणनिषेधः तत्रैव च द्वादशीफलहानिलक्षणो-निन्दार्थवादः, त्रयोदशीपारणन्तु यतीनां, तथाहि द्वादशीत्रये-

गृहिणां फलार्थिनां युज्यते, यतयस्तु फलनिरपेक्षाः कर्त्तव्यमिति कर्माचरन्ति। क्रतुशतप्राप्तिपुण्यलक्षणप्रशंसा यतीनामेव, न हि नानाविधानि क्रतुशतफलानि त्रयोदशीपारणाद्भवन्तीत्यर्थः प्रमाणं, तस्मात्प्रशंसामात्रमेतदिति। तदसत् तथाहि द्वादश द्वादश्योन-घ्नन्ति गृहिणामित्यस्य कोऽर्थः, न खलु क्रतं विना कर्मभोगेन क्षीयते, तेन द्वादश्याः स्वरूपेण फलतोवा नश्यतीति न सम्भवः किन्तु प्रत्यवायफलविभीषिकेयं। तथाहि न गिरा गिरेति ब्रूया-त्तदात्मानमेव तदुद्गातोद्गिरेदिति, न खलूद्गात्रात्मगिरणं प्रत्यक्षा-दिभिरुपलभ्यते, किन्तु गिरापदप्रयोगनिन्देयमिति स्थितं। तथा द्वादशीक्षयनिन्दा यति-गृहिणोर्यतेरपि हि नित्य-नैमित्तिक-काम्यानुष्ठानोपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्रयोजनं तस्मात् द्वादशीक्षये सत्युपात्तदुरितक्षयाभावादकरणनिमित्तप्रत्यवा-यापत्तेः त्रयोदशीपारणमनुचितमेव यतीनां।

तथाचाह।

नित्य-नैमित्तिकैरेव कुर्वाणोदुरितक्षयम्।
ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत्।
वैराग्यक्षेपविज्ञानात् कैवल्यं लभते नर इति॥

यदप्युक्तं "विष्णुसायुज्यमृच्छतीति यतीनामेवोचितं न गृहि-णामिति। तदप्यसत्। गृहस्थस्यापि यथोचितकर्मानुष्ठानात् मोक्ष-श्रुतेस्तत्र गृहस्थ-मुमुक्षोः कर्माण्युपदिश्यन्ते, श्रूयते च "स एवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्त्तत इति।

याज्ञवल्क्यश्च।

ननु।

चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते।

श्वोभूते प्रतिपच्चेत् भूते कव्यादिकी क्रिया॥

इति वचनात् पूर्व्वेद्युः कस्मान्न गृह्यते। तथाच वचनान्तरं।

चतुर्दशी चतुर्याममावास्या न लभ्यते।

श्वोभूते प्रतिपच्चेत् स्यात् पूर्व्वान्तचैव कारयेत्॥ इति॥

यद्यपि चतुर्दश्यां यामचतुष्टयव्यापिन्यमावास्या न लभ्यते किन्तु तदेकदेशव्यापिन्येव तथापि श्वोभूते प्रतिपदस्ति चेत् पूर्व्वद्युरेवोपवास इत्यर्थः। कात्यायनवचनेन पश्चादभ्युदय अमावास्येनेष्टेति, यत्रोपवासदिने प्रतिपत्सम्भवः तत्र चिहविष्केष्टिः प्रायश्चित्तत्वेनोक्ता। उच्यते। तस्याः प्रतिपदि सद्भावे द्वितीयासद्भावेऽप्युपपत्तिरन्यथासिद्धापराह्णशब्दस्याच बौधायन उक्ता, तस्माद्द्वितीयेऽहनि यागः। ननु यदा पूर्व्वेद्युः प्रातः पर्व्वचतुर्थांशाभावः परेद्युश्च प्रातः पर्व्वचतुर्थांशः तदा कस्मिन्नहनि यागः क्रियते। न तावत् पूर्व्वेद्युः तत्र प्रातःकाले पर्व्वचतुर्थांशादिसमावेशाभावेन यागकालाभावादपराह्णपर्व्वसन्धित्वाच्च। नापि परेद्युर्यागः तत्रापि विहितकालाभावात्।

अत्र केचिदाहुः अपरेद्युर्यागः कर्त्तव्यः पूर्व्वेद्युः पर्व्वचतुर्थांशादिविहितकालासम्भवात् प्रतिपच्चतुर्थांशे यागनिवर्त्तकाभावाच्च। यस्त्वयमस्ति निषेधो निवर्त्तकः।

न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित्।

रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनीति॥

उच्यते मध्याह्नसन्धिविषयोऽयं प्रतिषेधो नापराह्णसन्धिविषयः, तत्र

परेद्युर्यागविधानात् । ननु अपराह्नसन्धावेव परेद्युर्यागप्राप्तेस्तत्र च प्रतिपच्चतुर्थांशसम्भवात् प्राप्तिपूर्वकत्वाच्च निषेधस्य तत्रैव सामञ्जस्यं मध्याह्नसन्धौ तु पूर्वेद्युर्यागविधानात् प्रतिपच्चतुर्थांशगन्धोऽपि नास्तीति निषेधानुपपत्तिः । अत्रोच्यते । "पञ्चादयोऽभियष्टव्या इत्यस्य सम्पूर्णायां तिथौ खण्डतिथौ वा साधारणत्वं, तत्र द्वितीयेऽहनि प्रतिपच्चतुर्थांशस्य प्रातःकाले सम्भवात् प्राप्तिपूर्वकत्वं प्रतिषेधस्य घटत एव। न चैतावता प्रतिपच्चतुर्थांशे यागानुष्ठाने प्रत्यवायभाक्त्वं। "पञ्चादयोऽभियष्टव्या इति तत्र यागस्य विहितत्वाद्विहितप्रतिषेधे च विकल्प एव स्यात् ।

उक्तञ्च दृष्टदार्त्तिके ।

यद्यपि प्राप्य यत्किञ्चिद्विधिना तुल्यगोचरः ।
प्रत्यवायमतिं कुर्य्याद्विकल्पाश्रयणाच्च तत् ॥
दृष्टौ विधि-निषेधौ हि तुल्यवीर्य्यैकगोचरौ ।
विकल्पेन तयोरेकः प्रामाण्यमनुतिष्ठतां ॥
अङ्गीकृतनिषेधानां नैष दोषोऽस्त्यकुर्वतां ।
चोदनालक्षणत्वन्तु न प्रामाण्यं विधेस्तदा ॥
विधेः प्रामाण्यपक्षे तु प्रतिषेधनिराकृतेः ।
चोदनालक्षणं धर्मं न दोषोऽस्त्यनुतिष्ठतामिति ॥

न च "पञ्चादयोऽभियष्टव्या इत्यस्याः प्रतिपद्भागचतुष्टयेऽपि साधारणत्वेन सावकाशत्वात् "नयष्टव्यं चतुर्थांश इत्यस्य प्रतिपच्चतुर्थांशविषयत्वेन निरवकाशत्वात् विकल्पो न युक्त इति वक्तव्यं। यतः सामान्यविषयस्यापि विधेर्विशेषनिषेधेन नात्यन्तबाधः क्रियते तदधीनलाभत्वात् ।

तदुक्तं वार्त्तिककारैस्तत्र टीकायां ।

अन्तदुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति प्रतिषेधः प्रदेशेनारभ्यविधाने चेत्यत्र वच्यत इति ।

तस्माच्छास्त्रप्राप्तार्थस्यात्यन्तप्रतिषेधासम्भवात् "नानुयाजेषु ये यजामहं करोतीतिवद्विकल्पः, न तु तद्वदेव, तर्हि पर्य्युदासाश्रयणादिकल्पः परिहर्त्तुं शक्यते । तथाहि शाखाचोदितकालस्य पर्वचतुर्थांशप्रतिपदाद्यभागत्रयात्मकस्य प्रातःकाले दिनद्वयेऽप्यविद्यमानत्वेन यागानुपपत्तेर्नित्यचोदितकर्मणः परित्यक्तुमशक्यत्वात् प्रयोगवचनसामर्थ्येन किञ्चिद्विगुणेऽपि काले यष्टव्यमित्यापतिते पूर्व्वेद्युः प्रातःकाले पर्वचतुर्थांशाभावेऽपि पर्वमात्रसद्भावाद्यष्टव्यं, अथ वा परेद्युः प्रतिपदाद्यभागत्रयाभावेऽपि प्रतिपन्मात्रसद्भावाद्यष्टव्यमिति प्रतिपच्चतुर्थांशेऽपि पाक्षिकी प्राप्तिर्न देवैरपि वारयितुं शक्यते । तस्माल्लक्षणया पर्य्युदासप्रतिपादने विकल्पस्यापरिहार्य्यत्वाद्वरं मुख्यार्थत्वाय विकल्पप्रसक्तावपि प्रतिषेधवाचक एव नञस्तु । किञ्च पर्य्युदासासम्भवादपि प्रतिषेधः । तथाहि यदि तावत् प्रतिपच्चतुर्थांशस्य वर्जितत्वाविशेषात् । अथ चतुर्थांशवर्जितायां प्रतिपदि यजेतेति तर्हि पर्वचतुर्थांशे यागो न प्राप्नोति । अथ प्रतिपच्चतुर्थांशवर्जिते चोदिते काले यजेतेत्युच्यते तर्ह्यपराह्णपर्वसन्धावुत्तरमहश्चोदितकालस्तत्रापि प्रतिपच्चतुर्थांशमात्रमेवावशिष्टमिति तत्पर्य्युदासत्वेन कुत्रान्यत्र विधीयते । अथ नोद्यन्तमादित्यमीक्षेतेति धात्वर्थेन नञः सम्बन्धादनीक्षणसङ्कल्पवद्यागसंकल्पो विधीयते । उच्यते । युक्तं तत्र रागप्राप्तमीक्षणं पर्य्युदस्यत इति । इह त्वपराह्णपर्वसन्धौ परेद्युर्यागः शास्त्रप्राप्त इति न

पर्युदसितुं शक्यते । न चात्र यथा चोदकप्राप्तस्यार्षेयवरणस्य "नार्षेयं वृणीते" इति प्रत्यक्षोपदेशेन बलीयसा पर्युदासः तथा न शक्यते वक्तुं । उभयोरपि प्रतिपच्चतुर्थांशप्रापकपर्युदासयोरुपदेशशास्त्रत्वात् । न च यथा यागमात्रे प्राप्तस्य ये यजामह इत्यस्य यागविशेषेष्वनुयाजेषु पर्युदासस्तथात्र सम्भवति । न हि पर्युदासशास्त्रस्य पूर्व्वाह्लापराह्लादिपर्व्वसन्धिसाधारणस्यापराह्लादिपर्व्वसन्धिशास्त्रं प्रति विशेषशास्त्रता सम्भवति । न च पर्युदासशास्त्रस्य श्रुतित्वेन बलीयस्त्वं, श्रुतित्वासिद्धेः । तथाहि भाष्यकारेण चतुर्थांशनिषेधः कात्यायनवचनादित्युक्त्वा "न यष्टव्यं चतुर्थेऽंश इति श्लोकः पठितः । तस्माच्छ्रुतिमूलत्वाभिप्रायेण "श्रुतिरेषा सनातनीत्युच्यते । ननु पर्युदासवचने तव्यप्रत्ययश्रवणेन विधेः स्पष्टत्वादपराह्लादिपर्व्वसन्धिवचने वर्त्तमानापदेशत्वेन कल्प्यविधित्वादित्वम्प्राप्तौ वैषम्यं, नैतदेवं, प्रतिपदा पर्युदस्यते चतुर्थांशो वा यागो वेति सन्देहो यावता विलम्बेनापनीयते तावतेतरत्रापि वर्त्तमानापदेशो वा पञ्चमलकारोवेति सन्देहोऽप्यपनीयत एव । पर्युदासे नञोपलक्षणार्थत्वं इत्यधिको दोषः । तस्मात् पर्युदासासम्भवात् प्रतिषेधोऽवश्यम्भावी । एवं विकल्पे स्थिते मध्याह्नसन्धिविषयत्वं निषेधस्यापराह्नसन्धिविषयत्वं विधेरिति । यतो लौगाक्षिणा पूर्व्वाह्लापराह्नसन्धिविषयभेदेन पूर्व्वोत्तरदिनयोर्यागव्यवस्था कृता "पूर्व्वाह्णे वाथ मध्याह्न इत्यादिना । यत्तु "पर्व्वणोयश्चतुर्थांश इति वाक्यन्तदपि न प्रतिपच्चतुर्थांशे यागं निवारयति । तथाहि न तावच्चतुर्थमंशं निषेधति, अविच्छिन्नत्वान्निषेधत्वेनाप्रतीतेः । नापि पूर्व्वेषामन्येषामंशानां विधायकत्वेनार्थादितरमंशं निवारयति, विधिविभक्तिशून्यत्वेन विधित्वस्याप्रतीतेः ।

नाप्युपरि हि देवेभ्यो धारयतीतिवद्विधिः कल्प्यते, सिद्धवदनुवादात् प्रमाणान्तराविरोधाच्च विधयः कल्प्यन्ते। इह तु "पर्वणोयस्तुर्थांश इत्यत्र प्रतिपद्भागत्रयविधाने चतुर्थांशनिवृत्तिप्रयोजने कल्प्यमाने "न यष्टव्यं चतुर्थांशे" इति चतुर्थांशस्य पाचिकाभ्यनुज्ञाशास्त्रं विरुध्यते। न च वाच्यं विज्ञेय इति विधिप्रत्ययः, "अर्हे कृत्यतृचश्चे-त्यर्हार्थत्वेनापि घटमानत्वात्, भवतु वा विधिप्रत्ययः, तथाप्यन-पेक्षिते ज्ञाने न तु यजतौ। अथ निर्वपत्यालभतिवदनपेक्षितधा-तुगतोऽपि विधिरिष्टमर्थं विधत्त इति। उच्यते। सापि क्लिष्ट-कल्पनै वेति न विस्पष्टचतुर्थांशाभ्यनुज्ञाशास्त्रबाधने सामर्थ्यं। तथाहि धात्वर्थः श्रुत्या विधीयते तदसम्भवे धात्वर्थोऽन्यत्र विधीयते धात्वर्थे वान्यत् विधीयते। यत्र त्वन्यदेवान्यत्र विधीयते तदतिक्लिष्टं। अथ तद्दोषपरिहारार्थं धात्वर्थो ज्ञानमेव विधीयते कथं तर्हि कालस्य प्राप्तिः। अथ ज्ञानं विधीयमानं ज्ञेयसंस्काररूपमिति ज्ञानसंस्कार्य्यस्य कालस्य यागे विनियोगमन्तरेणानुपपद्यमानं विनियोगविधिं कल्प-यतीत्युच्यते। तच्च संस्कारानुपपत्त्या संस्कार्य्यविनियोगकल्पनायाः सक्त्वधिकरणे निराकृतत्वात्। ननु "सोमाभावे पूतीकानभिषुणु-यादिति तमस्मै भचं प्रयच्छेदिति च भक्षाभिषवसंस्कारान्यथानुप-पत्त्या फलचमसस्य पूतीकानाञ्च यागविनियोगो यथा कल्पितस्तथे-हापि ज्ञानसंस्कार्य्यस्य कालस्य विनियोगविधिः कस्माच्च कल्प्यते। उच्यते। युक्तं तत्र सोमेन यजेतेति क्लृप्तविनियोगस्य सोमस्य सोममभिषुणोतीति सोमचमस इति च समाख्यया भक्षाभिषव-संस्कारविधिर्न विरुध्यते इति, सिद्धे भक्षाभिषवयोः सोमसंस्कारत्वे

निरूढ़संस्कारस्य द्रव्यान्तरसंस्कारविधानेन सुग्रकं द्रव्यस्य पूर्वद्रव्य-समानकार्यत्वकल्पनं, इह त्वनिरूढ़ोज्ञानसंस्कारः संस्कार्यस्य कालस्य क्रममानान्तरलब्धविनियोगादृते न निर्वहति सक्त्वधिकरणन्याया-दिति युक्तमेव ।

किञ्च सोमद्रव्यस्यैव विनियुक्तस्य कदाचिदलभ्यमानस्य प्रतिनि-ध्युपादाने प्राप्ते नियममात्रं क्रियते "पूतीकानभिषुणुयादिति, न त्वपूर्वो विनियोगः क्रियते । न ह्यत्र विनियोजकान्तरेण विना सिद्ध्यति, तस्मात् "समुद्रं मनसा ध्यायति पृथिवीञ्च मनसा ध्यायति देव्यञ्च मनसा ध्यायतीतिवदारादुपकारकत्वमेव कालज्ञा-नविधानस्येति न काले प्रापकत्वं । भवतु वा ज्ञानसामग्रीसान्निध्ये ज्ञानस्यार्थसिद्धत्वेनाविधेयत्वात् कालविधित्वमेव कालज्ञानविधा-नस्येति । तथापि यागकाल इत्येकस्मिन् पदे किञ्चिदुद्दिश्य किञ्चिदुपादीयत इत्येतदनुपपन्नमेव, यथैतत् अङ्गैः स्विष्टकृतं यजतीतिवदषट्कर्तुः प्रथमभक्ष इतिवच्च, यथा हि वषट्कर्तृविशेषि-तभक्षणे प्राथम्यसम्बन्धो विधातुं न शक्यते तथा पदान्तरोपात्तपर्व-चतुर्थ्याद्यादिविशेषितस्य कालशब्दार्थस्य यागकाल इति समासपदै-कदेशप्रतिपादितस्यैकदेशान्तरार्थेन सह पश्चात्सम्बन्धोविधीयत इति नोपपद्यते समस्यमानपदयोः परस्परसम्बन्धात् प्राक्पदान्तरसम्बन्धा-नुपपत्तेः "परिपूर्णं पदं पदान्तरमाकाङ्क्षतीति न्यायात् । अथ "पर्वणोयश्चतुर्थांश आद्याः प्रतिपदस्त्रय इति पदान्तरोपात्तस्य कालस्य यागेन सम्बन्धो विधीयत इति।उच्यते। तथापि यागकाल-इति समासपदगतेनोपसर्जनीभूतेन यागेन सह सम्बन्धः प्राप्नोति।

किञ्च फलेन वा कारकेण वा क्रियाणां सम्बन्धो भवति। न च कालो यागस्य फलं, असाध्यत्वात् । नापि कारकं, कारकविभक्तिनिर्देशाभावात् । न हि "प्रतिपदि यजेतेतिवत् पर्वचतुर्थांशादेरधिकरणविभक्तिनिर्देशो दृश्यते । तस्माल्लक्षणयाधिकरणार्थः कल्पनीय इत्यपरः क्लेशः ।

अस्तु वा कालविधित्वं, तथापि प्रतिपदाद्यभागत्रयविधानं नोपपद्यते । तथाहि इह कालद्वयमुपात्तं पर्वचतुर्थांशः प्रतिपदाद्यभागत्रयञ्च । न चोभयमेकेन वाक्येन विधातुं शक्यते, यागानुवादेन कालद्वये विधीयमाने वाक्यभेदप्रसङ्गात् । अथ कालस्य निमित्तस्वरूपकत्वात् कालयोर्योगोविधीयते न तु यागे कालावित्युच्यते, तर्हि सुतरामेव वाक्यभेदः । तत्र कालभेदेन यागसम्बन्धभेदप्रतीतेः। अथ प्रतिग्रहं संमार्गेषु विधीयमानेष्वपि यथा न वाक्यभेदस्तद्वदिहापि प्रतिकालं यागे विधीयमानेऽपि न वाक्यभेद इत्युच्यते । तन्न युक्तं । तत्र ग्रहत्व-संमार्गयोरेकेन यत्नेन सम्बन्धं विधाय श्रौते विधितात्पर्य्ये पर्य्यवसिते सत्यार्थिका व्यापारभेदाः प्रतिग्रहमुपजायमाना अपि न वाक्यं भिन्दन्तीति। इह तु पर्वचतुर्थांशस्य प्रतिपदाद्यभागत्रयस्य चैकेनैव श्रौतविधितात्पर्य्येण यागसम्बन्धो येन शब्देन विधीयते तथाविधः शब्दोनास्त्युभयोः पृथगुपात्तत्वात्तस्मात्प्राप्तस्य यागस्यानेकस्मिन् सम्बन्धे विधीयमाने रेवतीवारवन्तीयाधिकरणपौर्णमास्यधिकरणादिपूर्वपक्षवद्वाक्यभेदः । ननु तद्वदेव तर्हि विशिष्टविधानेन वाक्यभेदपरिहारः कस्मान्नेष्यते । उच्यते । विशिष्टविधानेऽभ्युपगम्यमाने यागान्तरापत्तेर्न दर्श-पूर्णमा-

मयोरयं कालविधिः सिद्ध्यति । दर्श-पूर्णमासयोः शास्त्रान्तरप्राप्त-योरेकेन वाक्येन कालद्वयसम्बन्धे वाक्यभेद उक्त एव । अथ "अर्द्ध-मन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यत्र लक्षणया सन्धौ मिनोतीति विधाय यथा वाक्यभेदः परिहृतः तद्वत् पर्व-प्रतिपद्भागाभ्यां सन्धि-लक्षणया वाक्यभेदपरिहार इत्युच्यते । तन्न युक्तं । तत्र सन्धिदेशे लक्षितेऽर्थप्राप्तत्वेनान्तर्वेदि-बहिर्वेदिशब्दार्थयोरनुवादसम्भवात् । इह तु सन्धिकाले लक्षितेऽपि न पर्वचतुर्थांश-प्रतिपद्भागत्रयस्यानुवादः सिद्ध्यति । पूर्वापरयोरंशयोर्नियतयोर्विषमयोरर्थप्राप्त्यभावात् ।

किञ्च सम्बन्धविधानस्य किं लक्षणाक्लेशेन "सन्धौ यजेतेति श्रुत्या सन्धिकाले विहितोऽपि प्रयोगायोग्य इति तत्समीपलक्षणायां प्राप्तायां किं पर्यन्तः काल इत्यवध्यपेक्षायां पूर्वापरसामीप्यावधिविधानार्थं वाक्यमागतमिति वक्तव्यम् । यदि पर्वचतुर्थांशादिविधायकमेतद्वाक्यं भवेत् "पर्वणोयश्चतुर्थांश आद्याः प्रतिपदस्त्रय इति, तदपीदानीम-नुपपद्यमानं । यदि पुनरपि तमेव सन्धिं लक्षयितुं गच्छति तदा किं तेन कृतं भवति, तस्माद्यागस्य कालद्वयसम्बन्धविधाने वाक्यभे-दोऽपरिहार्य्यः । अथ यो यागकाल इति यागकालमनूद्य स पर्वण-श्चतुर्थांऽश आद्याः प्रतिपदस्त्रयोंऽशाश्चेति विधीयते । तर्हि याग-काल इति विशिष्टानुवादे एकस्तावद्वाक्यभेदः, पर्वचतुर्थांशस्य प्रति-पद्भागत्रयस्य चोभयोर्विधानादपरोवाक्यभेदः । यत्तदोर्व्यत्यासेनान्वय-इत्यपरोदोषः । अथ पर्वचतुर्थांशं प्रतिपद्भागत्रयं वानूद्य तयोरुभ-योर्यागकालत्वं विधीयते । एवं तर्हि पर्वणोयश्चतुर्थांश इति विशि-ष्टानुवादादेकोवाक्यभेदः, आद्याः प्रतिपदस्त्रयोंशा इत्यपि विशि-

श्चानुवादाद् द्वितीयोवाक्यभेदः, तयोरुभयोर्यागकालत्वविधानात्तृतीयोवाक्यभेदः, पर्वचतुर्थांशस्य प्रतिपद्भागचयस्य च विधायकान्तराभावादनुवादोऽपि न शक्यते कर्त्तुमित्यपरोदोषः ।

किञ्च कालस्यानुपादेयत्वात् कालविधिपरेषु वाक्येषु कालमुद्दिश्य कर्म्मैवोपादीयते, तदिह यदि पर्वचतुर्थांशमुद्दिश्य स यागकाल इति विधीयते तर्हि विधेयस्य यागकालस्यापि कालरूपत्वेनानुपादेयत्वादुद्देश्यत्वमेव प्राप्नोति । न चोद्देश्यद्वयस्य मिथः सम्बन्धः सम्भवति । न चानयोः समुदायीकरणार्थः एकः शब्दोऽस्ति, येन समुदायस्य यागसम्बन्धविधानाद्वाक्यभेदः परिह्रियेत । ननु यागकाल इति कालशब्देनोभयमेकरूपतया परामृश्य यागसंबन्धोविधीयते । तन्न । याग-कालशब्देन याग-कालयोः सम्बन्धविधानमशक्यमित्युक्तत्वात् ।

किञ्च याग-कालशब्देन पर्वचतुर्थांशादिकालोऽनूद्यते पुनस्तेनैव शब्देन यागस्य कालसम्बन्धो विधीयते, तदा वाजपेयोक्तं वैरूप्यमापद्येत । न ह्येकस्मिन्नेव वाक्ये एकमेव वस्तु तद्वाक्यगतमेव किञ्चिदपेक्ष्यानूद्यते किञ्चिदपेक्ष्य विधीयते इति सम्भवति । यदि तु वैरूप्यपरिहारार्थं पर्वचतुर्थांशपञ्जादिपरामर्शमन्तरेण शुद्धस्यैव कालस्य यागसंबन्धो विधीयते । तदयुक्तं । कालसम्बन्धविधानमन्तरेणापि सिद्धेः । अथ "यागकालः स विज्ञेय इति तच्छब्देन पर्वप्रतिपद्भागान् परामृश्य यागसंबन्धोविधीयते, तत्रापि पूर्वोक्तं वैरूप्यं तदवस्थमेव ।

किञ्च स इत्ययन्तच्छब्द एकवचनान्नचतुरः कालभागान् परा-

मष्टुं न शक्नोति । अथानुषङ्गन्यायेन पृथगेकैकं परामृशतीत्युच्यते । नैवम् । एकस्मिन्वाक्ये प्रतिपदमनुषङ्गेणैकस्यानेकेषु सम्बन्धेषु मृह्यमाणेषु वाक्यभेदप्रसङ्गात् ।

किञ्च एकवचनान्तस्य स इत्यस्य तच्छब्दस्य "आद्याः प्रतिपदस्त्रय इत्यत्र बहुवचनप्रतिनिर्द्देशात् अनुषङ्गोऽपि नोपपद्यते । यथा गच्छतामित्यस्य संयजचेरङ्गानीत्यत्र नानुषङ्गः ।

किञ्च यत्तदोर्नित्याभिसम्बन्धात्पर्वणोयश्चतुर्थांश इति पर्वचतुर्थांशे यच्छब्दश्रवणात् स एव तच्छब्देन परामष्टुं युज्यते न प्रतिपद्भागाः । अथ तत्रापि यच्छब्दोध्याह्रियते श्रुत्यध्याहृतयोः श्रुतेः शीघ्रं सम्प्रत्ययात् पुनरपि न तस्य परामर्शः । भवतु वाध्याहारः तथापि प्रतिपद्भागाइति बहुवचनान्तस्यैव यच्छब्दस्याध्याहारादेकवचनान्तेन तच्छब्देन पुनरपि कथं सम्बन्धः । अथ पर्वप्रतिपद्भागसमुदाय एकवचनान्तेन तच्छब्देन परामष्टुं शक्यते इत्युच्यते । तन्न । एकावच्छेदमन्तरेण समुदायानुपपत्तेः । अथैकेन तच्छब्देनोपादानात् समुदायत्वमित्युच्यते । यथा विहवाक्ये पौर्णमास्यादिशब्दोपादानादाग्नेयादीनां समुदायत्वसिद्धिः, यथा वा राजसूयशब्देनोपादानादनुमत्यादीनां मखादीनां[१] पवित्रादीनाञ्च यागादीनां समुदायत्वसिद्धिः । तन्न । तच्छब्दोपादानात् समुदायत्वं समुदायत्वादेकवचनान्ततच्छब्दोपादानमितीतरेतराश्रयापत्तेः । आग्नेयादीनान्त्वेकशब्दोपादानव्यतिरेकेणाप्येकोपाधिसम्बन्धोविद्यत एव । यदुत्पत्तौ कालविशेषयोगित्वं नाम तदुक्तम् । "एककालाभिसंयोगाद्भिन्नानामपि कर्मणां । समुदायार्पणं

(१) चनुमत्यादीनामक्षादीनामिति क० ।

शक्यमेकदेशस्त्वदृचवत्" ॥ इति। राजसूयेऽपि प्रकृतत्वविशिष्टयागत्वो-पाधिसद्भावात् समुदायत्वं भविष्यत्येकफलसाधनत्वाद्वा। नन्वत्रापि प्रकृतत्वविशिष्टकालत्वोपाधिसद्भावात् पर्वचतुर्थांशस्य प्रतिपद्भागचयस्य च समुदायत्वं भविष्यति। मैवं। किं पदार्थरूपेण कालयोः प्रकृतत्वं, किं वा वाक्यार्थरूपेण, न तावद्वाक्यार्थरूपेण, महावाक्येऽवान्तरवा-क्यार्थविवक्षाभावादविवक्ष्यमाणेऽवान्तरवाक्यभेदप्रसङ्गात्। नापि पदा-र्थरूपेण, न हि पर्वणोयश्चतुर्थांश इत्यत्र कस्यचिदेकस्य पदस्यार्थः पर्व-चतुर्थांशः प्रतिपद्भागचयं वा, तस्मान्न प्रकृतत्वावच्छेदात् समुदायत्वं पर्व-प्रतिपद्भागानाम्।

ननु यागसाधनत्वैकोपाधिसद्भावात् समुदायत्वं भविष्यति। नैतदेवम्। यागसाधनत्वात् समुदायत्वं, समुदायत्वादेकवचनान्तेन तच्छब्देन परामर्शः, तच्छब्दपरामर्शाद्यागविधानं, यागविधानाद्याग-साधनत्वं, यागसाधनत्वात् समुदायत्वमिति चक्रकापत्तिः। अत-एवैकावच्छेदमन्तरेण समुदायत्वानुपपत्तेः कालद्वयप्रतिपादकावेव शब्दौ कालद्वयसमुदायं लक्षयत इत्येतदपास्तम्। अथ "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः" इति पर्वचतुर्थांशस्य याग-साधनत्वावगमात् "पक्षादयोऽभियष्टव्याः," "न यष्टव्यं चतुर्थांशे" इति वाक्याभ्यां चतुर्थांशवर्जितप्रतिपद्भागचयस्य यागसाधनत्वावगमात् "पर्वणोयश्चतुर्थोंऽश इति वाक्यप्रमितेः प्रागेव कालावयवानां याग-साधनत्वलक्षणस्योपाधेः सिद्धत्वात् "पर्वणोयश्चतुर्थांश इति वाक्ये तेषां समुदायापादनञ्चानुपपन्नमिति न चक्रकापत्तिरित्युच्यते। तदयुक्तं। एकेनानेकेषु कालभागेषु यागसाधनतयाभिधीयमानेषु

वाक्यभेदापत्तेस्तत्परिहारार्थं समुदायरूपतयाप्येकत्वापत्तेर्विधेयानां कालभागानामपेक्ष्यते यागसाधनत्वमेव विधातुं। तत्र यदि पर-मिदानीं समुदायत्वापत्तिः प्रागेव वाक्यान्तरैः कालभागानां याग-साधनत्वं सिद्धं किमिदानीं समुदायत्वापत्त्या क्रियते।

किञ्च कालद्वयमिदं विधीयमानं किं समुच्चयेन विधीयते, किं वा विकल्पेन। न तावत् समुच्चयेन कालद्वयसम्बन्धः, तथा सत्युभयोरपि का-लयोर्यागानुष्ठानप्रसङ्गात्। नापि विकल्पेन, विकल्पो हि विरुद्धार्थयोः शास्त्रयोः परस्परतो विधानसामर्थ्याविर्भाव-तिरोभावादिना विरुद्ध-व्यापारचतुष्टयद्वयेन क्लेशेन सम्पाद्यमानोऽपि गत्यन्तराभावात् खेदे-नैवाभ्युपेयते। तच्चैकेनैव विधानात् तावत्क्लेशोऽनुभूयत इति किमे-तद्वाजपेयोक्तवैरूप्यापत्तिः, एवं कालद्वयाभ्युपगमेन सर्व्वमेतदुक्तं।

किञ्च प्रातरात्मकस्तृतीयोऽपि कालोऽत्रैवोपात्त इति तस्मिन्नपि विवक्ष्यमाणे पूर्व्वोक्तेषु पक्षभेदेषु सुतरां वाक्यभेदादयः सम्भवन्ति, तस्मादतिमन्दशक्तित्वादस्य वचनस्य न प्रतिपद्भागत्रयविधानमुखेन चतुर्थांशव्युदासकत्वं, किं तर्ह्यनेन वचनेन क्रियते, न किञ्चित् क्रियते। किन्तु "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिरिति पर्वचतुर्थांशे प्राप्ते "पञ्चा-दयोऽभियष्टव्या इति प्रतिपदि प्राप्तायां "प्रातर्यजध्वमिति प्रातःकाले प्राप्ते "न यष्टव्यं चतुर्थेऽंश इति पूर्व्वोक्तप्रकारेण प्रतिपच्चतुर्थांशे विकल्पेन निषिद्धे वैकल्पिकनिषेधेन लक्षितो यावत्कालराशिरवशिष्यते, नाना-शास्त्रप्राप्तः स सर्व्वः पिण्डीकृत्यैकेन याज्ञिककारिकावाक्येन कथ्यते, स्मरणसौकर्य्यार्थं "पर्वणोयस्तुतुर्थांश इति। यथा स्फ्येन वेदिमुद्धन्ती-त्यादिनानाशास्त्रप्राप्तोऽर्थः पिण्डीकृत्यानूद्यते "एतानि वै दशयज्ञायु-

धानीति। यथाह वार्त्तिककारः, "स्फ्यादेरुत्पत्तिसम्बन्धः कार्य्यैरुद्धननादिभिः। तत्र यज्ञायुधानीति प्राप्तमेवानुकीर्त्यते"॥ तथा "पर्व्वणोयश्चतुर्थांऽश इत्यपि नानाशास्त्रपिण्डीकृतानुवादः न पुनः कस्यचित्कालस्य विधायकमेतत् येनार्थात् प्रतिपच्चतुर्थांशं व्युदस्येत्।

किञ्च "उक्तोमनीषिभिरित्युक्तशब्देन वाक्यान्तरैरुक्त एवार्थः स्मरणे सौकर्य्यार्थमेकत्र पिण्डीकृत्यानूद्यते न त्वपूर्व्वोऽर्थोऽनेन वचनेन विधीयत इति दर्शयति। तस्मात्प्रतिपदाद्यभागत्रयस्यैव यागकालत्वमिति विधानाभावात् "न यष्टव्यं चतुर्थेऽंश इत्यनेन निषेधेनापि चतुर्थांशस्य पाक्षिकप्राप्त्याभ्यनुज्ञानपायाशात्यन्तमयागकालत्वं प्रतिपच्चतुर्थांशस्य। यद्यवश्यमनेन वचनेन विधायकेन भवितव्यं तर्हि प्रातर्विधानमस्तु सर्व्वमन्यद्वाक्यान्तरप्राप्तमनूद्यते। ननु प्रातःकालोऽपि "प्रातर्यजध्वमिति शास्त्रप्राप्त एव। नैष दोषः। न हि पौरुषेयवाक्यानां वेदमूलत्वापराधेन विधातृत्वं विहन्यते, सर्व्वस्मृतीनामप्रामाण्यप्रसङ्गात्। येषामपि वक्तृज्ञानानुमापकानि पौरुषेयवचनानि तेऽपि कथञ्चित् पौरुषेयेषु वचनेषु विध्यनुवादविरोध्यनुवादविवेकं कुर्व्वन्त्येव न पुनः सर्व्वानुवादकत्वं मन्यते। येनैवमाहुः यश्चोदनालक्षण इत्यनूद्य स धर्म इति विधीयत इति। ननु यदि वाक्यान्तरप्राप्तोऽप्यर्थो विधातुं शक्यते तर्हि पर्व्वचतुर्थांशादिरपि कस्मान्न विधीयते। उच्यते। न पर्व्वचतुर्थांशादिर्व्वाक्यान्तरप्राप्त इति न विधीयते किन्त्वनेकविधाने वाक्यभेदभयाद्वाक्यान्तरप्राप्तत्वेन कथञ्चिदनुवदितुमपि शक्यत्वाच्च विधीयत। ननु यदि एक एव विधातव्य इति पर्व्वचतुर्थांशादिकालस्य वाक्यान्तरविहितत्वात् प्रातःकालो विधी-

यते तर्हि विपरीतं कस्मान्न भवति । उच्यते । "पर्वणोयश्चतुर्थांश-इति चतुर्थांशस्य यच्छब्दोपबन्धादविधेयत्वं, प्रातःकालस्तु तदभावाद्विधीयते ।

किञ्च पर्वचतुर्थांशस्य "आद्याः प्रतिपदस्त्रय इत्येतद्विहितस्य यागकालः स इति तच्छब्देन परामर्श इत्यपरः क्लेशः ।

किञ्च येनैव हेतुना वाक्यभेदभयादिना कालचितयमेतेन न विधीयते तेनैव पर्वचतुर्थांशादिरेकोऽपि कालो न विधीयते, तथाहि पर्वणश्चतुर्थोऽश इति, चय एते अर्थाः किं तेषां अरुणैकहायनीन्यायेन प्रथमं क्रियया सह संबन्धमनुभूय पश्चात्पार्ष्णिकः परस्परसम्बन्धः, आहोस्वित्प्रथमं परस्परसम्बन्धः पश्चात्क्रियया सह सम्बन्धः इति यदापि प्रथमं क्रियया सम्बन्धः तदापि किं विशिष्टविधानन्यायेन क्रियया सम्बन्धः, अहोस्वित्क्रियानुवादेन तेषां सम्बन्धः इति । यदि तावद्विशिष्टविधानं तथा सति कर्मान्तरापत्तेर्न दर्श-पूर्णमासयोरयं कालविधिः सिध्यति । अथ क्रियानुवादेन पर्वणश्चतुर्थांशस्य च सम्बन्धो विधीयते, तदा प्राप्तक्रियानुवादेनानेकगुणविधानादेकस्ताद्वद्वाक्यभेदः पुनस्तेषां परस्परसम्बन्धविधानेऽपि स एव दोषः । अथ वाक्यभेदपरिहारार्थं चतुर्थांशादिविशेषणमनादृत्य पर्वमाचस्य यागसम्बन्धो विधीयते, तर्हि पर्वणि यदा कदाचिद्यागः प्राप्नोति । चतुर्थांशग्रहणञ्च विधित्वेनानुवादत्वेन वानुपपद्यमानं व्याहन्यते ।

ननु पर्वणि यदा कदाचिदीजानः कदाचिच्चतुर्थांशेऽपि यजत-इत्यनुवादः सम्भवति । नैतदेवं । पाक्षिकानुवादस्य न्यायविदामसम्मतत्वात् ।

अथ चतुर्थांशयागयोः सम्बन्धो विधीयते, तदपि यस्य कस्यचिद्-द्रव्यस्य चतुर्थांशो यागार्थं इत्युक्तं स्यात् न त्वभिलषितोऽर्थः सिध्यति।

नन्वंशविधानस्यांशिना विनानुपपत्तेरंशिनि कस्मिंश्चिदाचेतव्ये बुद्धिस्थः पर्वरूपोंऽशिविशेषः किमिति त्यज्यते। उच्यते। बुद्धिस्थोऽपि विध्यसंस्पृष्टो न सिध्यति। अथ यदि विधिना स्पृश्यते तर्हि तदे-वानेकविधानमापद्यते। ननु विधिना स्पृश्यमानोऽप्यर्थात् स्पृश्यते न श्रुत्या न तत्रानेकविधानं दोषः। मैवं। न ह्यनेनांशिविशेषेण विनां-शविधेरनुपपत्तिर्येनार्थादिममेवांशिविशेषं स्पृशेत्। न हि साधार-णस्यानुपपत्तिरभिधानमात्रेण बुद्धिस्थे विशेषे पर्यवस्यति, तथा सति सर्वत्र गुणविधेरुत्पादः "सोमेन यजेतेति यागमात्रं विधाय विधौ पर्य्यवसिते या साधारणी द्रव्याकाङ्क्षा सा विधानमन्तरेणैव बुद्धिस्थे द्रव्यविशेषे सोमे पर्यवस्यतीति कथं विशेषविधानं स्यात्। यत्रापि प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदः प्रसज्यते तत्राप्येकगु-णविधानमेवास्तु, इतरस्तु गुणविशेषः, सामान्यानुपपत्त्याप्याक्षिप्यत-इति वक्तुं शक्यत्वात्।

नन्वेवं तर्हि "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः"। इति वाक्येन कथं पर्वचतुर्थांशो यागाय विधीयते तत्रापि पूर्वो-क्तानां दोषाणां अविशिष्टत्वात्। उच्यते। "पर्वणोंऽशे तुरीय इति पर्वांशरूपं पदार्थद्वयं परस्परसम्बन्धविशिष्टमेकीभूतं यागाय वि-धीयत इति विधेयभेदाभावान्न वाक्यभेदः। ननु "पर्वणोंऽशे तुरीय इति पर्वांशयोः परस्परसम्बन्धो विधिव्यापारमन्तरेण न सिध्यति। सत्यं न सिध्यति। किन्तु विध्यन्तरमेवानयोः परस्परसम्ब-न्धविधायकमस्ति तद्यथा।

पञ्चदश्याः परः पादः पश्चादेः प्रथमास्त्रयः ।
कालः पार्वणयागस्य अन्यथा तु न विद्यते ॥

इति पञ्चदश्याः पादः इत्यनयोः सम्बन्धो विधीयते । नन्वेवं पञ्चदश्या आद्येऽपि पादे यागः प्राप्नोति अथ परः पादः इति विशिष्यते तर्हि वाक्यभेदः । नैष दोषः । "सन्धौ यजेतेति सन्धिकालस्य यागार्थस्य विहितस्यायोग्यत्वात् सन्धिसमीपवर्त्तिनि काले लक्षयितव्ये क्रियासमीपकालो लक्षितः किं नाडिका किं वा प्रहरस्तिथ्यर्द्धं तिथिर्व्वेत्यपेक्षायां पञ्चदशीपादः सामीप्यविशेषाकाङ्क्षापरिपूरणाय विधीयमानः सामीप्यावष्टम्भेन सन्धिप्रत्यासन्नतर एव सिद्ध्यति न दूरवर्त्ती । नन्वत्र वाक्ये न केवलं पञ्चदशीपादयोः सम्बन्धः प्रतीयते किन्तु यागसम्बन्धोऽपरः प्रतीयते । सत्यमेवं । किन्तु "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिरिति विधीयमानोऽनूद्यते आगामिन्या अपि प्राप्तेरनुवादसम्भवात् । तस्मात् पञ्चदशीवाक्ये पञ्चदशीपादमात्रं विधीयते । तस्य सम्बन्धस्य यागसम्बन्धमात्रं "पर्वणोंऽशे तुरीये त्वित्यनेन विधीयते । तस्य पर्वांशस्य तुरीयत्वमविहितमपि सन्धिशास्त्राच्छिन्नमनूद्यत इति पूर्वमेवोक्तं । "पर्वणोयश्चतुर्थांश इत्यनेन प्रातःकालसम्बन्धमात्रं विधीयते सर्वमन्यदनूद्यते । तस्मात् क्वचिदप्यनेकार्थविधानाभावान्न वाक्यभेदः । ननु पञ्चदश्याः पादस्य सम्बन्धो वाक्यान्तरविहितो यागसम्बन्धविधानपरे वाक्ये वाक्यभेदं न करोतीति यद्युच्यते तर्हि "पर्वणोयश्चतुर्थांश इति वाक्येनापि पञ्चदशीपादस्य यागसम्बन्धो विधातुं शक्यत एव । सत्यं शक्यत एव । किन्त्वसौ विशिष्टकालो यागाय विधातव्यः स चाविशिष्टस्य प्रातरात्मकस्य कालस्य विधानेनापि

वाक्योपपत्तौ न युक्तः विशिष्टस्य वाक्यान्तरसम्पादितत्वेन विशिष्ट-विधाने वाक्यभेदे परिहृतेऽपि स्वरूपमात्रविधानापेक्षया किञ्चिद्-विधिगौरवस्यापरिहार्य्यत्वाद्विशिष्टापादकवाक्यान्तरसापेक्षत्वाच्च। यत्र तु स्वरूपमात्रविधानयोग्यं किञ्चिदुपात्तं नास्ति तत्र गत्यभावा-द्विशिष्टमपि यागाय विधीयत एव यथा "पर्व्वणोंऽशे तुरीये त्विति।

ननु यदि काल-भागयोः विशिष्टत्वमेकेन वाक्येन क्रियते तस्य विशिष्टस्य यागसम्बन्धोऽपरेण वाक्येन तर्ह्यनेनैव प्रकारेण प्रतिपदाद्य-भागत्रयस्य यागसम्बन्धः कस्मान्नेष्यते। तथा हि "पञ्चदश्याः परः पादः पत्रादेः प्रथमास्त्रयः"। इति पत्रादेः पादा अपि सन्धिसामी-प्याक्षेपबलात् सन्धिप्रत्यासन्नाः पादाः प्रथमा एव सिद्ध्यन्तीति। नैतदेवं। इह कालावयवद्वयसम्बन्धः प्रतीयमान आस्ते। न चैक-स्मिन्नेव सम्बन्धे विधेये इतरस्मिन् हातव्ये प्रथमप्रतीतं पञ्चदश्याः पादस्य च सम्बन्धं हित्वा पश्चादवगतः पत्रादेः पादानाञ्च सम्बन्धो विधीयत इति कोऽयं नयः। किञ्च पञ्चदश्याः पादस्य च सम्बन्धः पाठसिद्धः पत्रादेः पादानाञ्च सम्बन्धोऽध्याहार्य्य इत्यपि तस्य दौर्ब्बल्यं। किञ्च विधीयतां नाम कामं पत्रादेः पादानाञ्च सम्बन्ध-स्तथापि केन वाक्येन संयोगो विधीयते, न तावत्तेनैव, वाक्यभेद-प्रसङ्गात्। नापि "पर्व्वणो यस्तुर्थोंऽश आद्याः प्रतिपदस्त्रय इत्यनेन, तस्य प्रातःकालसम्बन्धविधानेनैव चरितार्थत्वमित्युक्तत्वात्। न चान्यद्वा-क्यमस्ति येन प्रतिपद्भागत्रयस्य यावान् सम्बन्धो विधीयते। तस्माद्भा-गत्रयविधानासम्भवात् "न यष्टव्यं चतुर्थेंऽशे" इत्येतदेव चतुर्थांशनि-षेधकमवशिष्यते। तत्र प्रतिपच्चतुर्थांशस्यापि विकल्पेन प्राप्तिमनु-

जानातीत्युक्तं। तस्मात् पूर्वोक्तव्यवस्थयापराह्णादिपर्वसन्धौ प्रतिपच्चतुर्थांशो न निषिध्यते पूर्वाह्णपर्वसन्धौ तु निषिध्यत इति सिद्धं। तथाच त्रिकाण्डमण्डनेनोक्तं ।

सन्धिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

तदेतत्त्रिकाण्डमण्डनादिमतमन्ये नानुमन्यन्ते। कस्मात् पूर्वाह्णापराह्णसन्ध्ययोरुभयोरप्युपवासे द्वितीयेऽहनि च यागेऽनुष्ठीयमाने पक्षादेः प्रतिपच्चतुर्थांशस्य च सम्भवात् "पक्षादयोऽभियष्टव्याः"। "न यष्टव्यं चतुर्थेऽंशे" इति शास्त्रद्वयस्याप्यनुग्राह्यलाभात्सन्ध्याह्नसन्धावेकमपराह्णसन्धावपरमिति व्यवस्थायां प्रमाणाभावात्। न च लौगाक्षिवाक्यद्वयं प्रमाणं, तस्य पूर्वोत्तरदिनद्वययागव्यवस्थापरत्वेन विधि-निषेधव्यवस्थायां तात्पर्य्याभावादसम्भवाच्च। तथाहि आदित्योदयसमनन्तरं पर्वसन्धौ तदहर्यागे क्रियमाणे पक्षादिशास्त्रस्य निषेधानुग्रहदर्शनात्। अपराह्णसन्धावप्यर्वागस्तमयात्पर्वसन्धौ द्वितीयेऽहनि यागानुष्ठानेऽप्युभयोरनुग्रहदर्शनात्। एवं रात्रिसन्धावप्युभयोरनुग्रहः।

अथ प्रतिपच्चतुर्थांशे यागाभावात् पूर्वाह्णसन्धौ पक्षादिशास्त्रस्यानुग्रहो नास्तीत्युच्यते, तर्ह्यपराह्णसन्धावपि प्रतिपदाद्यभागे यागो नास्तीति पक्षादिशास्त्रमनुग्रहान्तमुच्यते। तथा शास्त्रान्तरवशादाद्ये भागत्रये यागेऽनुष्ठिते "पक्षादयोऽभियष्टव्या इत्यस्यार्थोऽपि क्रियत एव। तथा कृष्णपक्षादिदर्शपूर्णमासयागो न व्याप्नोतीत्येकदेशे एवमनुष्ठानं। यदपि "न यष्टव्यं चतुर्थेऽंशे" इति निषेधान्यथानुपपत्त्या प्रतिपच्चतुर्थांशे यागकल्पनं तदप्यचार्थयस्य हानं स्यादित्येतदधि-

करणविरुद्धम् । अत्र त्वार्षेयं वृणीते इत्यस्य त्रीन् वृणीते इत्यस्मिन् विद्यमाने न चतुरो वृणीत इति निषेधकल्प्यविधिपरत्वं न सम्भवतीत्युक्तं । तदिहापि "पञ्चादयोऽभियष्टव्या इत्यस्य "पञ्चादेः प्रथमास्त्वय इत्यस्मिन् विद्यमाने "न यष्टव्यं चतुर्थेऽंश इति निषेधाद्विध्यन्तरकल्पना न सम्भवतीति । तस्मात् "न यष्टव्यं चतुर्थेऽंश इति नित्यानुवादोऽयं न चतुरो वृणीते इतिवत् । अथ वा पर्युदासोऽयं, "पञ्चादयोऽभियष्टव्या इति प्रतिपदि यागकाल उच्यमाने "न यष्टव्यं चतुर्थेऽंश इत्यनेन चतुर्थांशवर्जिते प्रतिपदि यष्टव्यमित्युच्यते, एतदेव स्पष्टीकृतं स्मृत्यन्तरे "पञ्चादेः प्रथमास्त्वय इति, "आद्याः प्रतिपदस्त्रय-इति च । एवञ्च सति "पञ्चादयोऽभियष्टव्या इत्यस्य "न यष्टव्यं चतुर्थेऽंश इत्यस्य च प्रतिपद्भागत्रयस्तुत्या सहैकश्रुतिमूलत्वं भविष्यति । यत्तु पर्य्युदासपक्षे दूषणमभिहितं अपराह्णपर्व्वसन्धौ षड्घटिकात्मके च तिथिद्वये पूर्व्वेद्युः पर्व्वचतुर्थांशाभावेऽपि पर्व्वतृतीयांशे यष्टव्यम्, परेद्युः प्रतिपदाद्यभागत्रयाभावेऽपि चतुर्थभागे यष्टव्यमिति प्रयोगवचनसामर्थ्यादापतितो विकल्पो न देवैरपि वारयितुं शक्यते, पर्युदासस्य न नञो मुख्योऽर्थः किन्तु लक्षणयेति । तदसत् । यदि हि पर्व्वतृतीयभागवत् प्रतिपच्चतुर्थांशो न पर्युदस्तः स्यात् तदेवमपि भवेत्, इह तु "न यष्टव्यं चतुर्थेऽंश इति पर्युदाससद्भावात् पर्व्वतृतीयभाग एव यागः प्राप्नोति । न च पर्य्युदासे लक्षणेत्येकादशीनिर्णये दर्शितं, अनेनैव न्यायेन निषेधपक्षेऽपि पूर्व्वेद्युरेव यागः प्राप्नोति । अनुपपत्त्या हि पर्व्वतृतीयप्रतिपच्चतुर्थभागयोर्विकल्पेन यागे प्राप्ते "न यष्टव्यं चतुर्थेऽंश इति प्रतिपच्चतुर्थांशे यागस्य निवारितत्वात् ।

अन्यथा मुद्गप्रतिनिधित्वेन माषाणां ग्रहणे प्राप्ते षष्ठेऽध्याये जैमिनिनाभिहितं "प्रतिषिद्धं वा विशेषेण विहितं तु श्रुतिरिति, कात्यायनेन च "प्रतिषिद्धं प्रत्ययादिति, तत्रापि वक्तुं शक्यते प्रतिषिद्धानामपि माषाणामस्तु ग्रहणमिति। यस्तत्र परिहारोऽर्थप्राप्ते निषेधो बाधक एवेति स इह समान इति। यत् किञ्चिदेतत्पर्वचतुर्थांशस्य श्रुतत्वमसिद्धमित्युक्तं। तन्न। कात्यायनेन "श्रुतिरेषा सनातनीत्यभिधानात्। यत्तु भाष्यकारेण कात्यायनवचनादित्युक्तं तच्छ्रुतित्वेऽप्यविरुद्धं "श्रुतिरेषा सनातनीत्यस्य कात्यायनवचनत्वात्। दिङ्मात्रमत्र दर्शितं ग्रन्थविस्तरभयादिति। तस्मात् यथोक्त एव काले याग इति सिद्धं।

अन्ये त्वेवमाहुः "न यष्टव्यं चतुर्थेंऽशइति यद्वचनं तत्पूर्वाह्णसन्धिविषयमिति व्याख्येयं। न च पूर्वाह्ण-मध्याह्नसन्धिशास्त्रं हि पर्वचतुर्थांशे यागविधायकं न ततः प्रतिपच्चतुर्थांशे यागस्य प्राप्तिरस्ति अतः प्राप्त्यभावेन प्रतिषेधानर्थक्यं प्राप्तिपूर्वकत्वात् प्रतिषेधस्येति वाच्यं। ततः प्राप्त्यभावेऽपि "पञ्चादयोऽभियष्टव्यादित्यनेन प्राप्तिसम्भवात्। न च "आद्याः प्रतिपदस्त्रय इत्यनेनास्योपसंहार इति वाच्यम्। अस्य कालान्तरोपलक्षकत्वेनाविरोधादुपसंहारपरत्वानुपपत्तेर्दिनद्वयेऽप्युक्तयागकालचतुष्टयालाभे त्ववश्यं यागकालान्तरमभ्युपगन्तव्यम्। न च तस्यान्यत्प्रापकं शास्त्रमस्ति। व्यवस्थाशास्त्राणां व्यवस्थापरत्वेनापूर्वकालविधायकत्वानुपपत्तेः उभयपरत्वे वाक्यभेदप्रसङ्गात् केवलकालविधिपरत्वे च व्यवस्था निष्प्रामाणिकी स्यात् तस्मात्कालान्तरोपलक्षकमेवैतदिति सिद्धं। तदयुक्तं। विना

कारणं लक्षणाप्रसङ्गात् यागकालसम्बन्धस्य त्रिमुहूर्त्ता द्वितीया चेत्यादिशास्त्रेणार्थसिद्धेः, अतो न वाक्यभेदोऽपीति यत्किञ्चिदेतत्, तस्माच्च प्रतिपच्चतुर्थांशे याग इति सिद्धम्।

ननु हेमन्तकालेऽह्नामतिक्षुद्रत्वात् किञ्चिन्न्यूने चतुर्दशघटिकामात्र आवर्त्तनं भवति, तत्र तिथिवृद्धौ सत्यां षोडशनाडिकोऽपि पर्वचतुर्थांशो भवति, तत्र तन्त्वोपक्रमकालादारभ्य प्रातः पर्वचतुर्थांशोऽस्ति द्वितीयदिने च प्रातः प्रतिपत्तृतीयांशस्तत्र कुत्र यागः। अत्र केचिदाहुः अपराह्णपर्वसन्धित्वात्परेद्युर्याग इति। तदयुक्तं। "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्मादूषयन्त्याश्वलायनाः" ॥ इति हारीतवचनात् "त्रिमुहूर्त्ता द्वितीया चेत्यादिवाक्यविरोधाच्च। अपराह्णसन्धिशास्त्रं तु त्रिमुहूर्त्तशास्त्राविरुद्धे विषये व्यवतिष्ठते। नन्वपराह्णसन्धिशास्त्राविरुद्धे विषये पूर्वाह्णपर्वसन्धौ त्रिमुहूर्त्तशास्त्रं किमिति न व्यवतिष्ठते। उच्यते। पूर्वाह्णसन्धौ त्रिमुहूर्त्तोनद्वितीयाप्रसक्त्यभावात् त्रिमुहूर्त्तग्रहणमविवक्षितं स्यात्। त्रिमुहूर्त्तद्वितीयाशब्देन व्यवहिततरनिष्प्रयोजनपूर्वाह्णपर्वसन्धिलक्षणाप्रसङ्गाच्च चन्द्रदर्शनदिने यागनिषेधकवक्ष्यवाक्यविरोधाच्च। अपराह्णपर्वसन्धिविषयत्वे तूक्तदोषाभावात् तद्विषयतैव युक्ता।

किञ्च मत्पक्षे सन्धिसामीप्यं त्वत्पक्षे तन्नास्तीत्येतावान् विशेषः। तस्मात्प्रातर्विहितकालसम्भवात् तत्रैव याग इति। यदा तु सार्द्धं प्रहरद्वयं किञ्चिदधिकं चतुर्दशी पञ्चदश्यां मुहूर्त्तत्रयं प्रतिपत्प्रतिपदि मुहूर्त्तत्रयं द्वितीया तदा पूर्वस्यां यागः "यस्यां तिथावस्तमियात् सूर्य्यस्त्रिमुहूर्त्तकः। याग-दान-जपादिभ्यस्तामेवोपक्रमेत् तिथिं" ॥

इति वचनात् । ननु,—

पञ्चदश्याः परः पादः पचादेः प्रथमास्त्रयः ।

कालः पार्वणयागस्य अन्यथा तु न विद्यते ॥

इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले यागो न युक्तः, तन्न, यथा पचादयोऽभियष्टव्या इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले पर्वचतुर्थांशे वचनान्तराद्याग इष्यत एवमिहापि भविष्यति। यदा तु सम्पूर्णा चतुर्दशी पञ्चदशी प्रतिपचादित्यास्वमयादर्वागेव समाप्यते, द्वितीयाप्रभृतेर्वात्यन्तिकः चयः तदा पूर्वेद्युरेव यागः ।

चतुर्दशी च सम्पूर्णा द्वितीया चयगामिनी ।

चरुरिष्टिरमायां स्यात् भूते कव्यादिकी क्रिया ॥

इति वचनात्। यदा चतुर्दशी सम्पूर्णा पञ्चदश्यां न्यूनत्रिमुहूर्त्ता प्रतिपत् प्रतिपदि त्रिमुहूर्त्ता द्वितीया तदा पूर्वेद्युरेव यागः ।

त्रिमुहूर्त्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी ।

अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥ इति वचनात् ।

तथा ।

आदित्येऽस्तमिते चन्द्रः प्रचीण उदयाद्यदा ।

प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत च ॥ इति।

यदा पञ्चदश्यां मुहूर्त्तत्रयाधिका प्रतिपत् प्रतिपदि च तावती द्वितीया ततोऽधिका वा तदा पूर्वानुष्ठानमिति तन्मुहूर्त्तत्रयस्याधिकेषु मुहूर्त्तेषु विद्यमानत्वात् पूर्वस्यामेव यागः ।

उक्तञ्च ।

प्रतिपदि समुदिता चेदग्नीनन्वादधीत भूतदिने ।

विरमति पर्वदिवा चेत् सद्यःकालं तु पौर्णमास्यां ॥

अन्यापि ।

अपूर्णेऽनस्तगे चैव औपवस्थामनं मतं ।

प्रतिपत्तु यदा पश्चेद्धीनो वाभ्युदितः शशी ॥ इति ।

ननु यदेतत् "चरुरिष्टिरमावास्यां भूते कव्यादिकी क्रिया" इति, तथा "प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत च" इति, तथा "अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्" इत्येवमादिभिः पञ्चदश्यां यागविधानं कृतं तत्पर्वचतुर्थांशे प्रातर्विद्यमाने तु भवतु । "पर्वणोय-स्तुर्थांश इति पर्वचतुर्थांशस्यैव यागकालत्वेन विधानात्पर्वतृतीय-चतुर्थांशे यागो न युक्त इत्युच्यते ।

अर्वागस्तमयाद्यच द्वितीया तु प्रदृश्यते ।

तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥

इत्येतावन्मात्रं ।

यदि तु श्रूयते तर्हि पर्वचतुर्थांश एव पूर्वस्मिन्नहनि याग इत्युक्तं स्यादिह तु "त्रिमुहूर्त्ता द्वितीया चेदित्यादिनिमित्तविशेषे पञ्चदश्यां यागविधानात् न पर्वचतुर्थांशानुरोधेन बाधो युक्तः। तस्माद्यथोक्त-एव काले याग इति सिद्धं। यदा तु ग्रीष्मदिनान्त्यघटिकायां पर्वसन्धिर्मुहूर्त्तत्रयह्रासाच्च प्रातः पर्वद्वितीयांशः परेद्युस्त्रिमुहूर्त्ता द्वितीया तदा पर्वद्वितीयांशे यागः ।

तथाचाश्वलायनः।

पर्वणोंऽशे तृतीये तु कर्त्तव्येष्टिर्द्विजातिभिः ।

द्वितीयासहितं यस्माद्द्रूषयन्त्याश्वलायनाः ॥

यदा तु मुहूर्त्तत्रयादूर्ध्वं पूर्व्वेद्युः पर्वचतुर्थांशस्य प्रवेशः परेद्युश्च मुहूर्त्तषट्कादूर्ध्वं प्रतिपच्चतुर्थांशः स्यात् तदा परेद्युर्यागः, मुहूर्त्तषट्कात्प्राक् प्रवेशे तु पूर्व्वेद्युः ।

यदाह गार्ग्यः ।

यज्ञकालस्तिथिर्द्वैधे षट्कलो यदि लभ्यते ।
पर्व तत्रोत्तरं कार्य्यं हीने पूर्व्वमुपक्रमेत् ॥

कलाश्च मुहूर्त्तं न तु घटिका "त्रिमुहूर्त्ता द्वितीया चेदिति शास्त्रविरोधात् । स्मृतिप्रदीपकृताप्यत्र कलाशब्दस्य मुहूर्त्तार्थतोक्ता । पराशरवाक्ये तु षण्मुहूर्त्तस्तु विद्यत इति पाठः॥

अत्र वाक्ये केचिद्विवदन्ते । तथाहि चन्द्रदर्शने यागः सर्व्वथैव न कर्त्तव्यः किन्तु तत्पूर्व्वदिने यागः पूर्व्वतरदिने त्वन्वाधानमिति तस्य वाक्यस्यार्थः प्रतिभाति, स चायुक्तः आपस्तम्बोह्यन्वाधान-याग-दिनयोरन्यतरत्र विकल्पेन चन्द्रदर्शनं परिहरणीयमित्याह न पुनर्नियमेन यागदिने चन्द्रदर्शनं परिहरणीयमिति । यथाह—

यदहर्न्न दृश्यते तदहरमावास्यां श्वो न द्रष्टार इति वेति ।

वाजसनेयिनोऽप्युभयोरन्यतरत्रैव चन्द्रदर्शनं नियच्छन्ति न पुनरुभयत्रापि ।

यथाहुः ।

तद्वैके दृष्ट्वोपवसन्ति तस्माद्यदैवैनं न पुरस्तान्न च पश्चात् पश्येत तर्ह्येवोपवसेदिति च ।

कात्यायनोऽप्याह ।

चन्द्रादर्शनेनामावास्यामुपवसेत् सम्पूर्णेन पौर्णमासीमिति केचित् ।

लौगाक्षिरप्याह ।

यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत दृश्यमानेऽप्यनागतादा भवन्तीति ।

तथा सोमदर्शनदिने यागविधायिका निषेधाधिकारश्रुतिर्दृश्यते।

यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्त इमान् लोकानभ्युदेष्यतीति एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन् काले वास्मै लोकेऽर्द्धकं भवतीति यस्मिन्नहनि पुरस्तात्परतश्च सोमो न दृश्यते तदहर्यजेत इति ।

तदेतेषां विरुद्धशाखाणां व्यवस्था पर्वविचारे प्रतिपादिता वक्राचार्यमतानुसारादपराह्णादिपर्वसन्धौ सोमदर्शनदिने यष्टव्यमन्यथा नेति ।

किञ्चैवं श्रूयते उत्तरामुपवसेदनिर्णायेति ।

तस्यार्थः किं पूर्वामुपवसेदुत्तरां वेत्यनिर्णाय यत्र एतादृशं निश्चितं ज्ञानं नास्ति तत्रोत्तरामेवोपवसेदिति । एवं सन्देहेऽपि चेदुत्तरमेव पर्वोपवसनीयं किं पुनर्यदा पर्वविचारोक्तया व्यवस्थयोत्तरमेव पर्व निश्चितं प्रतीयत इति, तदनुसारेणैव "त्रिमुहूर्त्ता द्वितीया चेदिति वाक्यं व्याख्यातव्यं न स्वातन्त्र्येण । यदि तु स्वमहिमार्थं कथ्यते तावदध्याहारक्लेशेन प्रथमतो विधिसहितमाख्यातार्थपदलभ्यं तस्मिंस्लब्धेऽपि पुनरनायासेन किञ्चिदपि न शक्यते । तथाहि यदि चतुर्दश्यामन्वाधानाय कर्मं विधीयते तदैवं योजना, चतुर्दश्यामन्वाधानं कर्त्तव्यं परतः सोमदर्शनादिति । तच्चेदसुच्यते । अन्वाधानोत्कर्षः कस्माच्च विधीयत इति । तथाहि प्रतिपद्यापराह्णिकी

यद्यपि द्वितीया तथापि चतुर्द्दश्यां सोमदर्शनात्परतोऽन्वाधानं परत्र दिनेऽन्वाधानं कर्त्तव्यमिति चन्द्रदर्शने यागनिषेधवदन्वाधानस्यापि निषिद्धत्वात् । तद्यथा "यदेवैनं न पुरस्तान्न पश्चात्पश्येत्तर्ह्येवोपवसेदिति चन्द्रदर्शनेनामावास्यामुपवसेदिति, "यदहर्न दृश्येत तदहरमावास्यामिति च, तस्माच्चतुर्द्दश्यां सोमदर्शनात्तत्परित्यागेनान्वाधानोत्कर्षविधानमेव युक्तं । नन्वेवं चतुर्द्दश्यां सोमदर्शनाच्चतुर्द्दशीतः परत्र दिनेऽन्वाधानं कर्त्तव्यमिति चतुर्द्दशीग्रहणस्योभयत्र सम्बन्धाद्वाक्यभेदश्चतुर्द्दशीत इति विपरिणामकल्पना च स्यात् । उच्यते, न तावद्विपरिणामकल्पना चतुर्द्दश्यां सोमदर्शनादिति व्यवहितान्वयस्यादुष्टत्वाद्वाक्यभेदोऽपि नास्ति श्रुत्यर्थाभ्यां सम्बन्धद्वयाभ्युपगमात् ।

यथाह ।

श्रुत्यर्थाभ्यामनेकार्थविधानं न विरुध्यत इति ।

श्रौतान्वयनानात्वे हि वाक्यभेदो भवति ।

यथाह ।

कुमारिलः श्रौतव्यापारनानात्वे शब्दानामतिगौरवमिति ।

अतएवार्थिकत्वाद्द्वितीयसम्बन्धस्य शब्दविपरिणामकल्पनादोषोऽपि न प्राप्नोति । यथा रात्रिसत्रार्थवादत्वेनोपक्षीणापि प्रतिष्ठार्थात् प्रतिष्ठाकाम इत्यधिकारेण विशेषणं भवन्ती न वाक्यं भिनत्ति, न च विपरिणामदोषं जनयति । ननु व्यवहितकल्पनादयो दोषाः गत्यन्तरासम्भवेऽभ्युपगम्यन्ते । अस्ति लिह गत्यन्तरं चतुर्द्दश्यामन्वाधानापकर्षविधानं नाम । उच्यते । यदि व्यवहितकल्पनादिभयादन्वाधानापकर्षविधानमाश्रीयते तर्हि तत्रापि कियन्तो दोषाः प्रसज्यन्ते तदाकर्ण्यतां ।

तथाहि तत्र हि पक्षे सोमदर्शनादिति क सम्बध्यते, किं चतुर्दश्यां सोमदर्शनादिति, किंवा चतुर्द्दशीतः परत्र दिन इति, किं वामावास्यायाः परतः प्रतिपदि, किं वा परतः परस्यां दिशि सोमदर्शनादिति, न तावच्चतुर्द्दश्यां सोमदर्शनादिति, सर्व्वतोऽसम्भवत्वादेवंविधान्वयस्य सोमदर्शनस्य दोषत्वेनेष्टत्वाच्च । कथं तद्दत्त्यैव दिनेऽन्वाधानं विधीयते। नापि चतुर्द्दश्याः परत्र दिने सोमदर्शनादिति, अन्वाधानयोग्यचतुर्द्दशीतः परत्र दिने कदाचित्सोमदर्शनाभावात्। नापि प्रतिपदि सोमदर्शनादिति, तथा सति परात्परतः सोमदर्शनादित्युच्येत न पुनः परतः सोमदर्शनादिति । अथ लक्षणया स एवार्थः परत इत्यनेनोच्यते, तर्हि लक्षणैव दोषः । अथ प्रतिपदपि चतुर्दशीतः परा भवतीति परत इत्यनेन मुख्ययैव वृत्त्या प्रतिपदुच्यते, तर्हि पञ्चम्यां सोमदर्शनादपि चतुर्दश्यामन्वाधानं विधीयेत। अथ प्रतिपद्यापराह्णिकीत्यत्र साक्षादुपात्तेन प्रतिपदीत्यनेन सम्बन्धं कृत्वा प्रतिपदि सोमदर्शनादित्युच्यते, तथा सति प्रतिपच्छब्दस्य द्वितीयाशब्देन सोमदर्शनेन च सम्बन्धाद्वाक्यभेदो व्यवहितकल्पना च परतःशब्दोऽप्यनर्थकः प्राप्नोति । प्रतिपदि च कदाचिदपि सोमदर्शनाभावादसंभाव्यमानार्थत्वं प्राप्नोति।अथ "तद्वैके दृष्ट्वोपवसन्तीत्युपवासदिने सोमदर्शनस्य ज्ञातत्वेन गुणत्वमेव न दोषत्वमिति चतुर्दश्यामन्वाधानं कर्त्तव्यं चतुर्दश्यां सोमदर्शनादिति यदुच्येत, तर्हि चतुर्दशीग्रहणस्यान्वाधानं सोमदर्शनादिति यदि व्याख्येयं ततः कस्मिन्नहनीति वक्तव्यं । न तावच्चतुर्दश्यां, परतः सोमो दृश्यते येन तत्रान्वाधानं विधीयेत । नाप्यमावास्यायां, परतः सोम-

दर्शनादिति, तस्याचानुपात्तत्वादन्वाधानयोग्यचतुर्दश्यनन्तरायाममावास्यायां सोमदर्शनासम्भवाच्च । नापि प्रतिपदि परस्यां दिशि सोमदर्शनादिति, तत्र पूर्ववाक्यभेद-व्यवहितकल्पनयोः प्रसङ्गात् । तत्र नियमेन परस्यामेव दिशि सोमदर्शनं भवतीति परत इत्येतदपि अनुवादमात्रत्वेनाप्रवृत्तिविशेषकरं प्राप्नोति । अथ पौर्णमासीप्रतिपन्निवृत्त्यर्थं परतः परस्यां दिशि सोमदर्शनादिति यद्युच्येत, तदयुक्तं पौर्णमासीप्रतिपद्यप्यहोरात्रे परस्यां दिशि सोमदर्शनस्य विद्यमानत्वात् । अथ प्रतिपदि परस्यां दिशि पूर्वरात्रे सोमदर्शनादिति वा, प्रतिपदि रेखामात्रस्य दर्शनात् प्रथमदर्शनादिति वा, शुक्लप्रतिपदि सोमदर्शनादिति वा कृष्णप्रतिपन्निवृत्त्यर्थं व्याख्यायते । नैतदेवं । पूर्वरात्रादिग्रहणानामध्याहारप्रसङ्गात् श्रुतैरेव पदैस्तत्र द्रव्यलक्षणाप्रसङ्गादा पूर्वोक्तानामपि दोषाणां तदवस्थत्वाच्च उत्तरयोः पक्षयोः परतः शब्दानर्थक्यप्रसङ्गाच्च शुक्लप्रतिपदि कदाचिदपि सोमदर्शनाभावेनासम्भवार्थत्वप्रसङ्गाच्च । अथ शुक्लद्वितीयायां सोमदर्शनादित्युच्यते । तन्न । द्वितीयाशब्देन शुक्लद्वितीयालक्षणाप्रसङ्गात् प्रथमान्तद्वितीयाशब्दस्य सप्तम्यन्ततया विपरिणामप्रसङ्गाच्च । किञ्चैवं सत्यनपेक्षितेऽपि विषये कदाचिदन्वाधानापकर्षः प्रसज्येत तच्च स्पष्टार्थं यं कञ्चिदेव वारमधिकृत्य तिथिकृत्स्निरुदाह्रियते, आदित्यवारे उदयास्तमयव्यापिन्याममावास्यायां, सोमवारे उदयास्तमयव्यापिन्यां प्रतिपदि, मङ्गलवारे उदयास्तमयव्यापिन्यां द्वितीयायां सोमदर्शनाच्चतुर्दश्यामन्वाधानापकर्षः प्रसज्येत द्वितीयासोमदर्शनत्वाविशेषात् । अथ प्रतिपदि या शुक्लद्वितीया तस्यां सोमदर्शनादित्युच्यते ।

तत्र। अनन्तरैकदोषवर्जं पूर्व्वोक्तसर्व्वदोषाणां तदवस्थत्वात् प्रतिपदि कदाचिदपि द्वितीयाऽसम्भवादसम्भाव्यमानार्थत्वमप्युक्तं स्यात्। अथ प्रतिपत्संयुक्तायां द्वितीयायां सोमदर्शनादित्युच्यते। तच्च। सर्व्वस्या अपि द्वितीयायाः प्रतिपत्संयुक्तत्वा विशेषेणाविशेषणत्वप्रसङ्गात् पूर्व्वोक्तानामपि दोषाणां तदवस्थत्वात्। अथ द्विवैव प्रतिपद्युक्तायां शुक्लद्वितीयायां सोमदर्शनादित्युच्यते। तच्च। अनन्तरैकदोषवर्जं पूर्व्वोक्तदोषाणामन्यत्राप्यपरिहारात्।

किञ्च आदित्यवारे षष्टिनाडिकायाममावास्यायां सत्यां प्रतिपदि घटिकाद्वयविच्छ्राय सोमवारं व्याप्य मङ्गलवारे घटिकाद्वयमात्रायां प्रतिपदि सत्यां द्विवैव प्रतिपत्संयुक्ता द्वितीया जातेति तत्र सोमदर्शनाच्चतुर्दश्यामन्वाधानमपकृष्येत। अथ त्रिमुहूर्त्तायां द्वितीयायां सोमदर्शनादित्युच्यते। तच्च नहि कदाचिदपि त्रिमुहूर्त्तैव द्वितीया भवति। यद्यप्यत्यन्तह्रासो भवति तथापि त्रिमुहूर्त्ताधिकह्रासाभावात् सप्तविंशतिमुहूर्त्तन्यूनद्वितीया न कदाचित् सम्भवति। अथ यस्मिन्नहनि त्रिमुहूर्त्तैव द्वितीया तत्र सोमदर्शनादित्युच्यते। तच्च। तृतीयायुक्ता द्वितीया यस्मिन्दिने तत्र सोमदर्शनादपि हि चतुर्दश्यां अन्वाधानापकर्षः प्रसज्यते। अथ प्रतिपद्दिनवर्त्तिन्यां त्रिमुहूर्त्तायां सोमदर्शनादित्युच्यते, तर्हि षण्मुहूर्त्तायां वा प्रतिपदि द्वितीयायामपि चतुर्दश्यामन्वाधानापकर्षो न विधीयेत। अथ न्यूनतद्व्युदासार्थं त्रिमुहूर्त्तग्रहणं नाधिकव्युदासार्थमित्युच्यते, तर्ह्येष तावदेको दोषः संख्याशब्दानां न्यूनाधिकनिवर्त्तकस्वभावानां न्यूनमात्रनिवर्त्तकत्वमिति त्र्यमात्रन्यूनत्रिमुहूर्त्तायां

सोमदर्शनाविशेषेऽपि अन्वाधानानपकर्षः प्रसज्येत । अथापराह्णिकां द्वितीयायां सोमदर्शनादित्युच्यते। नैतदेवं। न हि कदाचिदपि तिथिः केवलपूर्वाह्णसम्बन्धिनी विद्यत इति, सर्वस्या अपराह्णसम्बन्धित्वाविशेषेण व्यावृत्त्यभावेन व्यर्थविशेषणत्वप्रसङ्गात् । अथापराह्णमात्रेण या द्वितीया सैवापराह्णिकी तस्यां सोमदर्शनादित्युच्यते। नैवं। अपराह्णमात्रवर्त्तिन्यां द्वितीयायां कदाचिदपि सोमदर्शनाभावेनार्थसम्भवादर्थत्वमुक्तं स्यात्। आपराह्णिक्यां द्वितीयायां सन्ध्यादिवर्त्तिन्यामेव सोमस्य दृश्यमानत्वात्। अथापराह्णिकी द्वितीया यस्मिन्दिने विद्यते तदीयसन्ध्यादिकाले सोमदर्शनादित्युच्यते, तर्हि तदीयसन्ध्यादिवह्नूनां पदानां अध्याहारः प्रसज्येत । पूर्वोक्तवाक्यान्तरव्यवहितकल्पनादयो दोषा अपि तदवस्था एव। तस्मात् सोमदर्शनदिने यागनिषेधश्रुतीनान्तद्दिने यागविधायकश्रुतीनाञ्च वक्ष्याचार्य्यमतानुसारेण व्यवस्थितविकल्पः पर्वविचारे प्रतिपादितस्तथैवैतदपि वचनं नेतव्यं न स्वातन्त्र्येण । तस्मान्नियमेन चतुर्दश्यामन्वाधानापकर्षविधायकमेतदिति युक्तं। तदयुक्तं। "यस्मिन्नहनि पुरस्तात्परतः सोमो न दृश्यते तदहर्यजत इति श्रुत्या यागस्य चन्द्रादर्शनदिने विधानात् ।

तथाच स्मृतिः ।

यदहस्तु न दृश्येत सम्पूर्णश्च यदा भवेत् ।

स एव कालो यागस्य एतेन हविषा यजेत्॥ इति॥

उपवासोऽपि तस्मात् "यदेवैतन्न पुरस्तान्न पश्चात्पश्येत्तर्हीवोपवसेदिति वचनेन चन्द्रादर्शनदिने विहितस्तयोरेकत्रावश्यम्भाविनि चन्द्रदर्शनेऽङ्गगुणविरोधे च तादर्थ्यादिति न्यायेनाङ्गकाल एव

परित्याज्यः, प्रधानविरोधेनाङ्गमपि परित्याज्यं किमङ्गगुणमपि ।

अतएवोपवसेदित्यनुवदत्यापस्तम्बः ।

यदहर्न दृश्यते तदहरमावास्यायां श्वो न द्रष्टार इति वेति ।

सम्पूर्णायाममावास्यायां तत्रोपवासः, अन्यस्यां तु पूर्व्वदिने उपवासः, चन्द्रादर्शनदिने याग इत्यर्थः, अन्यथाङ्गकालानुरोधेन प्रधानकालबाधप्रसङ्गात् ।

ननु "यदहः पश्चाचन्द्रमा अभ्युदेति तदहर्यजन्त इति चन्द्रदर्शनेऽपि यागं दर्शयति । उच्यते। इयं श्रुतिः चन्द्रोदयदिने यागमाह, न चन्द्रदर्शनदिने। तथापि चन्द्रोदयात् प्रागेव याग इत्याह श्रुतिः, "तदेनमङ्गः औषधीभ्यः सम्भृत्याऊतिभ्योऽधिजनां जनयतीति । उदितञ्च जना न तस्मिन्नहनि पश्यन्ति किन्तु द्वितीय एवेति। अतः खण्डतिथावपि तथैव यष्टव्यं अन्यथा श्रुतिविरोधः। यदपि "स एष आऊतिभ्यो जातः पश्चाद्दृश्ये" इत्यादिशाखाभिप्रायेणैव । अथ वा प्रतिपद्याऊतिभ्योजातः पश्चाद्द्वितीयदिने दृश्य इत्यर्थः, अत एव स्मृतिकाराश्च चन्द्रदर्शनदिने यागकरणादित्यत आह्नः ।

अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति ।

तथा ।

यजनीयेऽह्नि सोमश्चेदारुण्यां दिशि दृश्यते ।

तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातय इति ॥

तस्माचन्द्रदर्शनदिने सर्व्वथा यागो न कर्त्तव्यः, चन्द्रदर्शने यागनिषेधेनैव प्रतिपच्चतुर्थांशे निवृत्ते तस्मिन्निषेधो गुरुत्वख्यापनार्थः। एतेन "त्रिमुहूर्त्ता द्वितीया चेति वाक्यमन्वाधानोत्कर्षविधायकमिति निरस्तं।

किञ्च अन्वाधानोत्कर्षविधाने चतुर्दश्यां सोमदर्शनाच्चतुर्दशीतः परत्र दिने अन्वाधानमिति व्यवहितसम्बन्धद्वयं प्रसज्यते भवदुक्तदोषप्रसङ्गाच्च। यदि प्रतिपद्यापराह्णिकी त्रिमुहूर्त्ता द्वितीया तदा चतुर्दश्यामन्वाधानं कर्त्तव्यं परतः प्रतिपदि त्रिमुहूर्त्तद्वितीयायां सोमदर्शनादित्यर्थे स्वीक्रियमाणे अन्वाधानापकर्षविधानेऽपि दोषाभावात्। न ह्यत्र प्रतिपच्छब्दस्य वा द्वितीयाशब्दस्य वा सोमदर्शनादित्यनेन सम्बन्धः येन वाक्यभेद-विपरिणाम-व्यवहितकल्पनाः भवेयुः परत इत्यनेनैव तल्लाभाभावात् चतुर्दश्यामन्वाधानं परतः सोमदर्शनादित्युक्ते चतुर्दशीपरतः तिथिग्रहणे प्राप्ते अमावास्यायाः प्रतिपदि चन्द्रदर्शनासम्भवात्तु द्वितीया गृह्यते तस्या अपि चतुर्दशीपरत्वात् तदतिक्रमेण तिथ्यन्तरग्रहणे प्रमाणाभावाच्च। न द्वितीयामात्रे सोमदर्शनं चतुर्दश्यामन्वाधाने हेतुस्त्रिमुहूर्त्तग्रहणविरोधात् तस्माच्चतुर्दश्यामन्वाधानं, परतस्त्रिमुहूर्त्तद्वितीयायां सोमदर्शनादित्यर्थे स्वीक्रियमाणे दोषाभावात् प्रतीयमानान्वयनिर्वाहादङ्गकालानुरोधेन प्रधानकालबाधाभावाच्चान्वाधानापकर्षविधानमेव युक्तं।

किञ्च चन्द्रदर्शनदिने यागे स्वीक्रियमाणे बहुवाक्यविरोधोऽपि प्रसज्येत चारायणीयगृह्यपरिशिष्टात्।

यावत्पूर्व्वस्य हीनत्वं यावन्नास्तमितोदयः।
औपवस्तञ्च यागञ्च तावद्विदुरिति श्रुतेः॥

यावत्पूर्व्वस्य पौर्णमासीचन्द्रमसो हीनत्वं न भवति तावदौपवस्तं कार्यमित्यर्थः। यावच्चामावास्यायां चन्द्रमसोऽस्तंगतस्य प्रतिपद्युदयो न भवति तावद्यागकाल इत्यर्थः।

पूर्णे शशिन्यौपवस्तं यागश्च समसप्तके ।
पर्व्वण्यस्तङ्गते कुर्यात् यागश्चन्द्रार्कसम्मिते ॥

इति पूर्व्वोक्तएवार्थोऽनेन वाक्येन स्पष्टीक्रियते, पौर्णमास्यां पूर्णे चन्द्रमसि औपवस्ताख्यं व्रतं कार्य्यं तदनन्तरं चन्द्रार्कयोः समसप्तके प्रतिपदि यागः कार्य्यः इत्यर्थः ।

उदितो यदि वा हीनो दृश्यते यदि चन्द्रमाः ।
प्रतिपत्सु न कार्य्यः स्यात् विश्वेदेवाः पराङ्मुखाः ॥

उदितोदर्शप्रतिपदि हीनः पौर्णमासीप्रतिपदि चन्द्रमा दृश्यते तदा यागो न कर्त्तव्यः यतःसर्व्वे देवास्तत्र पराङ्मुखा भवन्ति ।

तथा ।

पुरा तु सूर्य्यास्तमया द्वितीया यदि दृश्यते ।
यागस्तत्र न दृश्येत विश्वेदेवाः पराङ्मुखाः ॥

अस्यापवादः ।

निशायां प्रथमे भागे दृश्यते पूर्णता तथा ।
तद्व्यत्ययो दिवा नास्ति तत्र यागः परेऽहनि ॥
रात्रेस्तु प्रथमे भागे न दृश्येत्पूर्णता तथा ।
हीनोदितो दिवा यत्र तत्रेष्ट्या यागमादिशेत् ॥

अत्र केचिदाहुः प्रतिपदि सोमदर्शने सतीष्टेरकरणं वैकल्पिकं द्रष्टव्यं, यदि हि प्रातः प्रतिपत्तृतीयांशे लभ्यमानेऽपि सोमदर्शनेनैव दर्शयागः प्रतिषिध्यते तदा ।

यजनीयेऽह्नि सोमश्चेदारुण्यां यदि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥

इति कात्यायनवचनमसङ्गतार्थमेव स्यात्। "त्रिमुहूर्त्ता द्वितीया चेदित्यनेन चतुर्दश्यामन्वाधानं विधाय पञ्चदश्यामर्थादिष्टिते यागे क्वते द्वितीयेऽहनि प्रतिपदि यजनीयेऽहनि सोमश्चेदित्युच्यमानमसङ्ग-तं स्यात् । तस्याङ्गो यजनीयत्वाभावात्तत्पूर्वाह्णस्य तदा यजनीयत्वात् "तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति यागाभावे व्याहृति-होमो दण्डदक्षिणादानं विधीयमानमपि आकस्मिकत्वादसङ्गतं, सोम-दर्शनेन तु पाक्षिके यागप्रतिषेधेऽभ्युपगम्यमाने चन्द्रदर्शनेऽपि सति यद्यनेनैव वचनेन व्याहृतिहोम-दण्डदक्षिणादानसहितो यागो विधी-यते तदैवमर्थवन्नान्यथा। तदयुक्तं। तथाहि किमयं प्रायश्चित्तविधि-र्निमित्तविधिर्वा, आद्येऽपि किं यजनीयदिने चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शनदिने यागे न तावत् प्रथमः कल्पः, यो ह्यज्ञानाच्चन्द्रदर्शनदिने यागं अनुतिष्ठति तस्य पश्चाच्चन्द्रदर्शने प्राय-श्चित्तविधायकत्वेनास्योपपत्तेः श्रौत-स्मार्त्तनिषेधपाक्षिकत्वापादनसा-मर्थ्याभावात्। किञ्च प्रायश्चित्तं विहितनिषिद्धातिक्रमे भवति, तत्र यदि यजनीयदिने चन्द्रदर्शने प्रायश्चित्तमिदं भवेत् तर्हि तन्निषेधकल्पना प्रसज्येत यदि चन्द्रदर्शनदिने यागे इदं विधीयेत। उत चन्द्रदर्शन-दिने यागे निमित्ते प्रायश्चित्तं भवेत्तदा तन्निषेधस्य श्रुतत्वान्न काचित्कल्पनेति तत्रैवेदं प्रायश्चित्तं। नापि द्वितीयः निषेधपाक्षिक-त्वाभावप्रसङ्गात्। निमित्तविधित्वेन किं यजनीयदिने चन्द्रदर्शन-निमित्तमिदं विधीयते उत चन्द्रदर्शनदिने यागे निमित्ते इति। नो-भौ पूर्वोक्तदोषात् । द्वितीयपक्षे यजनीयदिने चन्द्रदर्शननिमित्तत्व-प्रतीतिरपि बाध्यते। तस्माच्चन्द्रदर्शनदिनयागनिषेधो न पाक्षिक-

इति। अत्र केचिदाहुः सर्व्वदा प्रतिपद्येव यागो न द्वितीयाविद्ध-प्रतिपदि यागः, नापि पर्व्वचतुर्थांशे याग इति।

यदाह कात्यायनः।

पक्षादावेव कुर्वीत सदा पक्षादिकर्म यत्।

पूर्वाह्ण एव कुर्व्वन्ति विद्धेऽप्यन्ये मनीषिणः। इति॥

अन्ये ग्रहणं विकल्पसूचनार्थं अन्ये न कुर्व्वन्तीत्यर्थः, यथा वषड़ित्येके समामनन्ति वौषड़ित्येके इति। तदप्ययुक्तं। पूर्वाह्णसन्धि-निमित्तपूर्व्वदिनयागविधायकपर्व्वचतुर्थांशयागविधायकद्वितीयाविद्ध-प्रतिपन्निषेधचन्द्रदर्शनदिनयागनिवन्धननिन्दावचनवहुतरश्रौतस्मार्त्त-वचनसंकोचप्रसङ्गात् अनेकदोषदुष्टविकल्पप्रसङ्गाच्च। न चात्र विधि-विभक्तिरस्ति, आचारमात्रोपदेशात्। न चेदृशस्य स्पष्टविधिविभक्ते-र्युक्तं वहुतरवाक्यार्थविकल्पापादने सामर्थ्यं, तस्मादेतद्वाक्यममनीषिण-इत्यकारप्रश्लेषेण व्याख्येयं। तस्मादुक्तैव व्यवस्था युक्ता। अत्र बौधा-यनसूत्रनिवन्धकाराः केचिदपराह्णगतेऽपि पर्व्वसन्धौ पूर्व्वेद्युरुपोष्य तद्-हर्य्यागानुष्ठानं वदन्ति तत्राप्यपराह्ण एव सन्धिसमीपे यागमिच्छन्ति। तदनुपपन्नं। प्रातर्यजध्वमितिमन्त्रलिङ्गविरोधात्।

ननु प्रातर्यजमानेऽपि सन्धौ यजेतेति विरुध्यते। नैष दोषः। सन्धि-शास्त्रस्य सामीप्यपरत्वात् सामीप्यस्य चापेक्षिकत्वात्प्रातःकालोऽन्यापे-क्षया समीप इति वक्तुं शक्यत इति न सन्धिशास्त्रविरोधः, अपराह्णस्तु न कथञ्चित् प्रातरिति वक्तुं शक्यत इति अपराह्णयागानुष्ठाने भवति प्रातःकालविरोध इति न तत्र यष्टुं युज्यते। ननु यावत्स-न्धिरतिसामीप्यं भवति तावत्सन्धिशास्त्रमनुगृहीतं स्यादित्यपराह्णगतसन्धौ

तत्समीप एव यागापेक्षा। हन्त रात्रिगतेऽपि पर्वसन्धौ तत्रैवानुष्ठानं प्राप्यते । अथ पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्देवता यजत इत्यहर्विधानाद्रात्रिस्तु साक्षाद्विधानाभावात् सन्धिसमीपस्य कथञ्चिदहन्यप्युपपत्तेर्न रात्रौ यागानुष्ठानमिति। हन्तापराह्णगतेऽपि सन्धौ तत्र यागेऽनुष्ठीयमाने प्रातर्विधिविरोधादपराह्णस्य साक्षाद्विधानाभावात् सन्धिसामीप्यस्य प्रातरप्युपपत्तेर्नापराह्णे यागानुष्ठानं। अथ सन्धौ यजेतेति प्रत्यक्षविधित्वात् प्रातर्यजध्वमिति मान्त्रवर्णिकोऽस्पष्टविधिर्दुर्बलः । अत्रोत्तरमहर्देवता यजत इत्यपि वर्त्तमानापदेशत्वेनास्पष्टविधित्वात् दुर्बलत्वमविशिष्टं। अथोच्यते। विरोधे सति बलाबलञ्चिन्त्यते रात्रिगतस्य सन्धेरहरपि समीपं भवति इति सन्धिशास्त्रस्य सामीप्यपरत्वादहःशास्त्रेणाविरोधः, हन्त तत एव हेतोः प्रातःशास्त्रेणाप्यविरोधः ।

किञ्च सन्धिशास्त्रस्य सामीप्यं न मुख्योऽर्थः, किन्तु लाक्षणिक इति, तच्चाप्यविशिष्टमस्पष्टत्वं। न च प्रातर्विधेरप्रकरणाधीनत्वं दोषः, अप्रकरणाधीनमपि स्मार्त्तदक्षिणाचारादिकं प्रकरणाधीनाच्छ्रौतात् प्रत्यासत्त्यपेक्षकात्प्रयोगशास्त्राद्बलीय इत्युक्तं शिष्टाकोपाधिकरणे । तस्माच्चोदितदेश-कालाद्यबाधेन यावत्सामीप्यं सम्भवति तावदेव गृह्णाति । अन्यथा सामीप्यलोभेन प्रातःकालबाधे क्रियमाणे सर्वाङ्गान्तरबाधोऽपि प्रसज्यते। तस्मात् सन्धिसमीपवर्त्तिनि पर्वचतुर्थांशादिचोदितकालानुरोधिनि प्रातःकाले यष्टव्यं। ननु "न सायमस्ति देवयागाय जुष्टमिति सायंकाले यागनिषेधादवशिष्टोऽपराह्णादिरभ्यनुज्ञातो गम्यते विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वात् यथा वामेन

चक्षुषा पश्यतीत्युक्ते दक्षिणेन न पश्यतीति गम्यते। भवेदेवं यद्ययं निषेधः स्यान्न त्वयं निषेधः एकस्मिन्नेव वाक्ये प्रातःकालविधिः सायंकालनिषेध इत्युभयपरत्वे वाक्यभेदप्रसङ्गादवश्यमेको विधिरितरोनित्यानुवाद इत्यभ्युपगन्तव्यं। तत्र यदि सायंकालनिषेधोऽभ्युपगम्यते तदा पारिशेष्यात् प्रातरपराह्णादिकालः सर्व्वोऽपि यागार्थः पाक्षिकः प्राप्नोति इति न प्रातःकालस्य नित्यवद्यागसम्बन्धानुवाद उपपद्यते। अथवा यदि प्रातःकालविधिरभ्युपगम्यते तदा तद्व्यतिरिक्तानां सर्व्वकालानां नित्यमेव निवृत्तत्वात् सायंकालनिवृत्तिरपि नित्यानुवादः।

किञ्च प्रातर्यजध्वमिति प्रैषरूपत्वात् प्रैषस्य च प्रवर्त्तनात्मकत्वाद्विधिकल्पनमेव युक्तं, न सायमस्तीति तु वर्त्तमानापदेशत्वेन प्रवर्त्तनालेशः प्रतीतिरपि नास्तीति नेदन्निषेधविधानं निषेधस्य स्पष्टमनवगतेः प्रागुदाहृतप्रातःपूर्व्वाह्णे यागप्रतिपादकवक्तृवचनविरोधप्रसङ्गात्। ननु यदा प्रातः पर्व्वचतुर्थांशोऽस्ति तदेवं भवतु, यदा तु तस्याभावः तदा किं प्रातःकालो बाध्येत उत पर्व्वचतुर्थांश इति कथं निर्णयः। उच्यते। अपराह्णे यागे क्रियमाणे पूर्व्वाह्णप्रातःकालतन्त्रप्रक्रमकाला बाध्येरन्, प्रातस्तु क्रियमाणे पर्व्वचतुर्थांशमात्रबाधः इति बाधलाघवाय स एव युक्तः। तस्मादपराह्णगतेऽपि पर्व्वसन्धौ परेद्युरेव याग इति सिद्धं। मध्याह्नसन्धौ तु तदहरेव यागः प्रागुदाहृतलौगाक्ष्यादिवचनात्।

अत्र केचिदाहुः।

प्रतिपद्यप्रविष्टायां यदि लिष्टिः समाप्यते।

अष्टम्याञ्च चतुर्द्दश्याममावास्यां विशेषतः।
रजोऽभ्युपगमे काले भजन् लक्ष्म्या प्रहीयते॥

तथा।

उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः।
तावच्छ्रीस्तिष्ठते प्रीता यावत्तैलं न संस्पृशेत्॥
नखच्छेदे कृते श्मश्रु-शिरोरुहनिवर्त्तने।
न स्नायीत नरः शेषे तैलस्नानं विधीयते॥

भविष्यत्पुराणे।

सप्तम्यां संस्पृशेत्तैलं स्निग्धा भार्या विनश्यति।

सुमन्तुः।

तैलाभ्यङ्गो नार्कवारे न भौमे
नो सङ्क्रान्तौ वैधृतौ विष्टि-षष्ठ्योः।
पर्वस्वष्टम्याञ्च नेष्टः स दृष्टः
प्रोक्तान्मुक्ता वासरे सूर्य्यसूनोः॥

गर्गः।

पञ्चमी दशमी चैव तृतीया च त्रयोदशी।
एकादशी द्वितीया च पक्षयोरुभयोरपि॥
अभ्यञ्जन-स्पर्शनाद्यैर्योऽत्र तैलं निषेवते।
चतुर्णां तस्य वृद्धिः स्याद्धनापत्य-बलायुषाम्॥

याज्ञवल्क्यः।

पञ्चमी दशमी चैव पूर्णिमा च त्रयोदशी।
तृतीया चैव यस्तैलं नरः समुपसेवते॥

अभ्यङ्गात् स्पर्शनाद्वापि भक्षणाच्च तथैव च ।
चतुर्णां तस्य वृद्धिः स्याद्धनापत्य-बलायुषाम् ॥

योगियाज्ञवल्क्यः ।

दशम्यां तैलमस्पृष्ट्वा यः स्नायादविचक्षणः ।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशोधनम् ॥
मोहात्प्रतिपदं षष्ठीं कुहूं रिक्तां तिथिं तथा ।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः सह हीयते ॥
पञ्चदश्यां चतुर्दश्यां सप्तम्यां रविसङ्क्रमे ।
द्वादशीं सप्तमीं षष्ठीं तैलस्पर्शं विवर्जयेत् ॥
त्रयोदश्यां तृतीयायां प्रतिपन्नवमीदये ।
तैलाभ्यङ्गं न कुर्वीत कुर्युर्वा नवमीं विना ॥

अत्र कासु तिथिषु तैलाभ्यङ्गोविहितः प्रतिषिद्धश्च, तत्र केचिदाहुर्विधिः पक्वतैलविषयः निषेधस्त्वपक्वतैलविषयः ।

तदुक्तं षट्त्रिंशन्मते ।

सूर्य-शुक्रादिवारेषु निषिद्धासु तिथिष्वपि ।
स्नाने वा यदि वास्नाने पक्वतैलं न दुष्यति ॥

नवम्यां त्वभयोरपि निषेधः "कुर्युर्वा नवमीं विनेति वचनादिति। तदयुक्तं, निषेधस्य रागप्राप्ततैलाभ्यङ्गविषयत्वात् विहिततैलाभ्यङ्गविषयत्वे विकल्पप्रसङ्गात् । न च विधिशास्त्रात्तैलमात्रप्राप्तादपक्वतैलरूपविशेषनिषेधान्न विकल्प इति वाच्यम् । "ये यजामह करणस्याप्येष वै सप्तदशः प्रजापतिर्यज्ञे च यज्ञे न्वायत इति वाक्यात् सर्वयज्ञेषु प्राप्तावनुयाजादेरपि विशेषनिषेधान्निषेधपक्षे विकल्पाभावप्रस-

ङ्गात् तत्र च यः परिहारः सोऽत्रापीत्यदोषः। रागप्राप्तविधिप्राप्तो-भयविषयत्वे च निषेधस्यैकत्र शास्त्रान्तरबाधसापेक्षो निषेधः अन्यत्र निरपेक्ष इति विधिवैषम्यं प्रसज्यते। न च विधिवैषम्यपरिहारार्थो विधिप्राप्तस्यैव प्रतिषेध इति वाच्यम्। शास्त्रान्तरबाधं विना निषेधस्य सम्भवे तद्बाधस्यानुपपत्तेः। तस्मान्निषेधो रागप्राप्ततैलविषयस्तत्र च सर्वतैलनिषेधप्राप्तौ "सूर्य-शुक्रादिवारेष्वितिवाक्येन निषेधो न पक्वतैल इति क्रियते। तस्मादपक्वं तैलं विहिततैलाभ्यङ्गे उपादेय-मिति सिद्धम्।

बृहस्पतिः।

सङ्क्रान्त्यां रविवारे च षष्ठ्यां भौमदिने तथा।
द्रव्यान्तरगतं तैलं न दुष्यति कदाचन॥

अत्र केचिदाहुः 'कदाचनेत्यनान्यस्मिन्नपि निषिद्धकाले द्रव्या-न्तरगतस्य तैलस्यादुष्टत्वमुच्यते अन्यथास्य वैयर्थ्यापत्तेरिति। तदयुक्तं। यदि सर्वस्मिन्नपि निषिद्धकाले द्रव्यान्तरगतस्य तैलस्यादुष्टत्वं विव-क्षितं स्यात्तदा उत्तरार्द्धेनैव तत्सिद्धेः पूर्वार्द्धवैयर्थ्यं प्रसज्यते, पूर्वा-नुवादपक्षाच्च 'कदाचनेत्येतावन्मात्रानुवादत्वमुक्तम्। तस्मात् सङ्क्रा-न्त्यादिषु द्रव्यान्तरगतं तैलं कदाचिदपि न दुष्यतीत्यस्यार्थः। अतः सङ्क्रान्त्यादिचतुष्टय एव द्रव्यान्तरगतस्य तैलस्यादुष्टत्वं नान्यत्रेति सिद्धमित्यन्ये। तदयुक्तं। सर्वस्मिन्काले द्रव्यान्तरगतस्य तैलस्य वचनान्तरेणादुष्टत्वाभिधानात्। सङ्क्रान्त्यादिग्रहणस्य वा निःशेषप्रद-र्शनार्थत्वात् सङ्क्रान्त्यादावपि न दुष्यति किमुतान्यत्रेति।

तदाह प्रचेताः।

सार्षपङ्गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

यमः ।

घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यङ्गेषु नित्यशः ॥

कात्यायनः ।

माङ्गल्यं विद्यते स्नानं वृद्धि-पर्वोत्सवेषु च ।
स्नेहमाचममायुक्तं मध्याह्नात् प्रविशिष्यते ॥

इति तैलाभ्यङ्गादिकालनिर्णयः ।

---

## अथ तिलतर्पणनिषिद्धकालः ।

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्य-पुत्त्र-कलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

क्वचित्तु गृहीति पाठः ।

पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः ।
विद्या-पुत्त्र-कलत्रार्थी तिलान् पञ्चसु वर्जयेत् ॥

इति तिलतर्पणनिषिद्धकालः ।

---

## अथ मैथुनकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

षोड़शर्त्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्वण्याद्यास्चतस्रस्तु वर्जयेत् ॥

एवं गच्छंस्त्रियं चामां मघां मूलञ्च वर्जयेत्।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्।
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्॥

रजोदर्शनप्रभृति 'षोड़श निशाः', 'स्त्रीणां', 'ऋतुः' गर्भग्रहण-कालः, तस्मिन् 'युग्मासु' समासु रात्रिषु, 'संविशेत्' गच्छेत् यदि पुत्रार्थी। कन्यार्थी त्वयुग्मासु।

यदाह मनुः।

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियं॥

शङ्खः।

ऋतौ सङ्गच्छतः पुंसो यावत् षोड़शमं दिनं।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु॥

युग्मास्वपि उत्तरोत्तरैव प्रशस्ता।

यदाहापस्तम्बः।

चतुर्थीप्रभृत्याषोड़शसु उत्तरामुत्तरां युग्मां।

प्रजापतिः।

श्वये शस्तृगमनं इत्युपदिशति।

व्यासः।

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान्।
नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः॥

एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां शठा पापा वर्णसङ्करकारिणी ।
जायते सर्वदुष्टा स्त्री दुःख-शोक-भयप्रदा ॥
धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढ़व्रतः ।
प्रजायते चतुर्दश्यां गुणाढ्यैर्जगतः पतिः ॥
राजपुत्री महाभागा सा राजवशगाथ वा ।
जायते पञ्चदश्यान्तु बहुपुत्रा पतिव्रता ॥
विद्या-लक्षणसम्पूर्णः सत्यवादी जितेन्द्रियः ।
आश्रयः सर्वभूतानां षोड़श्यां जायते पुमान् ॥

निशायहणाद्दिवसनिषेधः ।

अत आहतुः शङ्ख-लिखितौ ।

न दिवा मैथुनं व्रजेत् क्लीवा अल्पवीर्याश्च दिवा प्रसूयन्ते अल्पायुषश्च तस्मात्परिवर्जयेत् ।

ज्योतिःशास्त्रे ।

अल्पायुरल्पवीर्यो वा क्लीवोवाप्यत्र जायते ।
एवं प्रदुष्यते गर्भो दिवामैथुनसम्भवः ॥

अनृतावप्येतत् ।

यदाहापस्तम्बः ।

गृहमेधिनां व्रतमहन्यसंवेशस्तौ ब्रह्मचार्य्येव पर्वणीति ।

अष्टमी चतुर्दशी पूर्णिमा अमावास्या रविसंक्रान्तिश्चेति पञ्च पर्वाणि पर्वानुष्ठेयप्रस्तावे दर्शितानि। तत्र ब्रह्मचार्य्येव स्त्रियं नोपेयादित्यर्थः ।

पैठीनसिः ।

ऋतुमुपासीत तस्मिन्नपि पर्व्वाणि वर्जयेत् पुमांसमुपपादयेत् ।

मनुः ।

ऋतुकालाभिगामी स्यात् स्वदारनिरतः शुचिः ।
पर्व्ववर्जं व्रजेच्चैनां न ऋतौ रतिकाम्यया ॥

वसिष्ठोऽपि ।

ऋतुकालाभिगामी स्यात् पर्व्ववर्जं ।

पर्व्वग्रहणञ्च कालान्तरोपलक्षणार्थं ।

मनुः ।

अमावास्यामष्टमीञ्च पौर्णमासीं चतुर्दशीं ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातकोद्विजः ॥

अत्रामावास्यासाहचर्य्यादष्टमी-चतुर्दश्योः पक्षयोर्नाप्यृतौ ।

विष्णुः ।

नाष्टमी-चतुर्दशी-पञ्चदशीषु स्त्रियमुपेयात् न श्राद्धं भुक्का न दत्त्वा ऋतुसन्ध्ययोः ।

शिवरहस्ये ।

दिवा जन्मदिने चैव न कुर्य्यान्मैथुनं व्रती ।
श्राद्धं दत्त्वा च भुक्का च श्रेयोऽर्थी न च पर्व्वसु ॥

सौरपुराणे ।

षष्ठ्यष्टमी पञ्चदशी अमावास्या चतुर्दशी ।
ब्रह्मचारी भवेन्नित्यं जन्मर्क्षे च विशेषतः ॥

वाराहपुराणे वैष्णवं प्रकृत्य वराह उवाच ।

षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्दशीं ।
मैथुनं नैव सेवेत द्वादशीञ्च मम प्रियां ॥

तथा ।

अष्टम्याञ्च चतुर्दश्यां षष्ठ्याञ्च द्वादशीं नृप ।
अमावास्यां पञ्चदशीं मैथुनं यो न गच्छति ।
तिर्य्यग्योनिं न गच्छेत्स मम लोकं हि गच्छति ॥

'आद्यास्तस्र इति रजोदर्शनादारभ्य चतस्रोरात्रीर्वर्जयेत् ।

तथाच पैठीनसिः ।

प्रथमे न द्वितीये न तृतीये न चतुर्थे आह्वयेत ।

अन्ये त्वाहुः ।

स्नानादारभ्य चतस्रो वर्जयेत्, पूर्वं तस्याः स्पर्शननिषेधेनैव गमनस्यापि निषिद्धत्वादिति । तदयुक्तं । स्पर्शनिषेधाद्धि स्पर्शात्प्रत्यवायः गमननिषेधे तु तस्मादपीति फलभेदात् । अतएव रजस्वलास्पर्शे गमने च भिन्नं प्रायश्चित्तमाम्नातं ।

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः ।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥

इति मनुवचनविरोधाच्च स्नानादूर्ध्वं गर्हितरात्र्यसम्भवात् ।

तथाच कात्यायनः ।

रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात् ।

"अर्वाक् पुनर्गर्हिता रात्रयः सम्भवन्ति शेषा ब्रह्महत्या स्त्रीणां यस्मिन्मासि रजोदर्शनं यस्तावान्न जायते सोऽभिशस्तः" इत्यादिभिर्वाक्यैर्गर्हाश्रवणात् । तस्माद्रजोदर्शनादारभ्य चतस्रोवर्ज्याः ।

देवलेन तु तिस्रोरात्रयोर्व्वर्ज्या इत्युक्तं।

अशुद्धदिवसेष्वेतां मैथुनार्थं यदि व्रजेत्।
आयुः प्रजा च धर्मश्च तस्य पुंसः प्रहीयते।
तस्मात्त्रिरात्रं दारान्वै पुष्पितान्परिवर्जयेत्॥

ऊर्ध्वं त्रिरात्रात् सम्भव इत्येके।

हारीतेनापि चतुर्थ्यां रात्रौ गर्भाधानमुक्तं।

चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानवदुपेतं ब्रह्म गर्भं सन्दधाति।

ततश्च विकल्पः स च व्यवस्थितः चतुर्थेऽहनि रजोनिवृत्तौ विधिर्वैपरीत्ये तु निषेधः।

अतएव गोभिलः।

यदर्त्तुमती भवति उपरतशोणिता तदा सम्भवकालः।

तथाच मनुः।

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।

'साध्वी' गर्भाधानादिकर्मयोग्या।

मनुः।

नोपगच्छेत्प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने।
रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः।
प्रज्ञा तेजोयशश्चक्षुरायुश्चैव प्रहीयते॥
तां विसर्जयतस्तस्य रजसा समभिप्लुतां।
प्रज्ञा लक्ष्मीर्यशश्चक्षुरायुश्च परिवर्द्धते॥

देवलः।

अशुद्धां दिवसेष्वेतां मैथुनार्थं यदि व्रजेत्।
आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते।
तस्मात् त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत्॥

'आद्यास्तस्त्र इत्युपलक्षणं एकादश्यां त्रयोदश्यामपि निषिद्धत्वात्।
तथाच मनुः।

आसामाद्यास्तस्रस्तु निन्दितैकादशी तथा।
त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः॥

अत्रैकादशी-त्रयोदश्यावृतोर्न पक्षस्य।
तथा।

निन्द्यास्वष्टासु चान्यासु स्त्रियोरात्रिषु वर्जयेत्।
ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसेत्॥

'निन्द्यास्वष्टासु' आद्यास्तस्त्र एकादशी त्रयोदशी च एतासु षट्सु अन्यासु अनिन्दितास्वपि यासु कासुचिद्रात्रिषु स्त्रियोवर्जयेत्, रात्रिद्वय एव स्त्रियोऽभिगच्छेदित्यर्थः।

देवलः।

ब्राह्मण्या द्वादशाहं स्यादेषोक्ता ऋतुधारणा।
दशाष्टौ षट् च शेषाणां विधीयन्तेऽनुपूर्वशः॥
एतेष्वपि त्र्यहं पूर्वं वर्जयित्वा रजस्वलां।
शुद्धां स्नातां ततो भार्यां समेयुः पुत्रकारणात्॥

इदञ्च ब्राह्मण्यादीनां द्वादशादिऋतुधारणवचनं गम्यत्वाभिप्रायं, न ऋतुकालाभिप्रायं, "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनुवचनविरोधात्। "शुद्धां कालतः सुस्थ इन्द्रा-

विति चन्द्रबले सति मघा-मूले विहाय गच्छन् लक्षणयुक्तं पुत्रं सञ्जनयेदित्यर्थः।

ज्योतिःशास्त्रे।

पित्र्यं पौष्णं नैर्ऋतञ्चापि धिष्ण्यं
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नां।
पुष्टां चामां पुत्रकामोऽहि गच्छन्
सल्लक्षण्यं पुत्रमाप्नोति सम्यक्॥

स्त्रियां तु सङ्गतः पित्र्ये पौष्णे वा नैऋतेऽथ वा।
यः समुत्पद्यते गर्भो न सचेमो गुणैर्युतः॥
पुमान्विंशतिवर्षश्चेत्पूर्णषोड़शवर्षया।
स्त्रिया सङ्गच्छते गर्भाशये शुद्धे रजस्यपि॥
वीर्यञ्च स्याद्‌शापत्यं तयोर्न्यूनाब्दयोः पुनः।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा॥

ऋतुयौगपद्ये तु गमने क्रममाह देवलः।

यौगपद्ये तु तीर्थानां विप्रादि क्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा॥

'तीर्थं' ऋतुः, तद्यौगपद्ये, वर्णक्रमेण विवाहक्रमेण वा गच्छेद-पुत्रां वा पूर्व्वमित्यर्थः।

कश्यपः।

यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा॥ इति॥

अत्र 'ग्रहणक्रमः' ऋतुग्रहणक्रमः, एतच्च ऋतुगमनमावश्यकं।

तथाच यमः ।

ऋतुस्नातान्तु योभार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नाच संशयः ॥

पराशरः ।

ऋतुस्नातान्तु योभार्यां सन्निधौ नोपगच्छति ।
स गच्छेन्नरकं घोरं ब्रह्महेति तथोच्यते ॥

बौधायनः ।

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥

तथा ।

त्रीणि वर्षाण्यृतुमतीं यो भार्य्यां नानुगच्छति ।
स तुल्यं ब्रह्महत्याया दोषमृच्छत्यसंशयं ॥

देवलः ।

यः स्वदारानृतुस्नातान् सन्निधौ नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भप्राप्तिविनाशकः ॥

सन्निधानेऽप्यशक्तस्य न दोषः ।

तथाच स्मृत्यन्तरे ।

यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजां प्राप्तां विनाश्य सः ॥

अत्र केचिदाहुः ।

एतदजातपुत्रविषयं "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ऋ एष वा-

अनृणो यः पुत्री यज्वा ब्रह्मचारी वा" इत्यस्याः श्रुतेरेकपुत्त्रोत्पादनेनैव चरितार्थत्वात्।

तत्रञ्च कूर्मपुराणे।

ऋतुकालाभिगामी स्यात् यावत्पुत्त्रोऽभिजायते।

ननु पुत्त्रान्तरोत्पत्तिविधायिकाप्यस्ति श्रुतिः "दशास्यां पुत्त्रानाधेहीति, सत्यं, यदीयं विधायिका स्यात् किन्तु बह्वपत्यप्रशंसार्था। अन्ये त्वाहुः नैतदजातपुत्त्रविषयम्।

एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

इत्यादिभिर्वचनैर्बहुपुत्त्राश्रयणात् कूर्मपुराणवचनस्य त्वयमर्थः। ऋतुकाल एव यावद्गर्भसम्भवो भवति तावद्गन्तव्यं गर्भसम्भवे न गन्तव्यमिति।

गर्भसम्भवचिह्नानि सुश्रुते दर्शितानि।

सद्योगृहीतगर्भायाः श्रमोग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणञ्च योनेरिति।

ऋतुकालगमनञ्च स्त्रीणामप्यावश्यकं।

ऋतुस्नाता च या नारी भर्त्तारं नोपगच्छति।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीन्तु विवासयेत्॥

तथा "यथा कामीत्यनेन अनृतावपि स्त्रीणामिच्छानतिक्रमेण गच्छेदिति विधीयते।

गौतमः।

ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जं।

देवलः ।

ऋतुकालेऽभिगमनं पुंसा कार्यं प्रयत्नतः ।

सदैव पर्ववर्जञ्च स्त्रीणामभिमतं हि तत् ॥

यत्तु बौधायनवचनं ।

ऋतौ नोपैति योभार्यामनृतौ वोपगच्छति ।

तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति ॥

तत्स्त्रीणामिच्छाभावे वेदितव्यं ।

अत्र केचिदाहुः ।

वा शब्दो ऋतुगमने वैकल्पिकमाह ततश्च गच्छतोऽपि स्त्रीरक्षण-सामर्थ्यं यस्यासावृतावेव गच्छेदिति, तथाच हेतुरुक्तः "स्त्रियोरक्ष्या-यतः स्मृता इति, तदयुक्तं, यदि स्त्रीणामिच्छायां सत्यामपि न गमनं तदा "यथा कामी भवेदिति विरुध्यते, वा शब्दः पूर्वोक्तानृ-तुगमनापेक्षया, द्वैधे चार्थेन हेतुवशात् व्यवस्था, "स्त्रीणां वरमनु-स्मरन्नित्येतत्पर्यालोचनयाप्येवमेवावगम्यते ।

तथाच तैत्तिरीयके इन्द्रस्त्रियश्च प्रकृत्योक्तं ।

ता अब्रुवन् वरं वृणवामहा ऋत्विया प्रजां विन्दामहै काम-माविजनितोः सम्भवामेति तस्मादृत्विया स्त्रियः प्रजां विन्दन्ते का-ममाविजनितोः सम्भवन्ति वरो वृत्तं ह्यासामिति ।

तथाच वशिष्ठः ।

अपि च काठकैर्वचनैर्विज्ञायते, अपि नः श्वोविजनिष्यमाणान् पतिभिः संयत इति स्त्रीणामिन्द्रदत्तो वरः ।

ऋतुविशेषेण गमने कालविशेष उक्तः आयुर्वेदे ।

ग्रीष्मादवसन्ते तस्मान्ते ततः पश्चाद्घनोदये।
सेवेत कामतः कामं हेमन्ते शिशिरेऽपि च॥

ग्रन्थान्तरे पूर्वार्द्धमन्यथा पठ्यते "पक्षेवसन्त-शरदोर्मासे ग्रीष्म-नदाघयोरिति।

थिाच शक्त्यपेक्षया व्यवस्थेति।

आपस्तम्बः।

प्रवचनयुक्तोवर्षा-शरदौ मैथुनं वर्जयेत्।

एतच्च समावृत्तविषयं।

अतएव शौनकः।

अधीयीत समावृत्तो ब्रह्मचारिकल्पेन यथा न्यायमितरे जायोपेयीत्येकेऽपत्यं प्राजापत्यं तदिति।

'तत्' जायोपयोगनाम्ना प्राजापत्यमित्यर्थः।

इति मैथुनकालनिर्णयः।

---

## अथ पुंसवनकालः।

तत्र याज्ञवल्क्यः।

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा।

प्राग्गर्भचलनात्पुंसवनाख्यं कर्म कार्य्यमित्यर्थः।

यमः।

गृहीतगर्भायां प्रथमे मासि द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यादिति।

पुंनक्षत्राणि च रत्नकोशे दर्शितानि।

हस्तोमूलं श्रवणः पुनर्वसुर्मृगशिरास्तथा पुष्यः ।
पुंसंज्ञितेषु कार्य्येष्वेतानि शुभानि धिष्ण्यानि ॥

'धिष्ण्यानि' नक्षत्राणि ।

बृहस्पतिः ।

पुंसवनं स्पन्दति शिशाविति ।

इति पुंसवनकालः ।

---

## अथानवलोभनकालः ।

शङ्खः ।

गर्भस्य स्फुटताज्ञानेऽभिषेकः परिकीर्त्तितः ।

विष्णुः ।

गर्भस्य स्फुटताज्ञानेऽभिषेकः कर्म ।

सोमः ।

चतुर्थे गर्भलक्षणं ।

आश्वलायनगृह्यपरिशिष्टे ।

चतुर्थेऽनवलोभनं ।

बैजवापगृह्यं ।

अथ पुंसवनानवलोभने करोति मासि द्वितीये तृतीये वा पुरा स्पन्दत इति पूर्य्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ।

इत्यनवलोभनकालः ।

---

## अथ सीमन्तोन्नयनकालः।

तत्र लौगाक्षिः।

तृतीये गर्भमासे सीमन्तं कारयेत् शुक्लपक्षस्य पुण्याहे पर्वणि वा।

आपस्तम्बः।

सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि।

बैजवापः।

अथ सीमन्तोन्नयनं मासि चतुर्थे पञ्चमे षष्ठे वा।

सोमः।

षष्ठे सीमन्तोन्नयनं।

शाङ्खायनगृह्ये।

सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनं।

बृहस्पतिः।

सीमा षष्ठेऽष्टमे मासि।

विष्णुः।

षष्ठेऽष्टमे मासि सीमन्तोन्नयनं।

शङ्ख-याज्ञवल्क्यौ।

षष्ठेऽष्टमे वा सीमन्तः।

शौनकः।

चतुर्थे गर्भमासे सीमन्तोन्नयनं षष्ठाष्टमयोर्वा पूर्य्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्।

पुंनक्षत्राणि पुंसवनकालप्रस्तावे दर्शितानि।

गोभिलः।

अथ सीमन्तकरणं प्रथमे गर्भे चतुर्थे मासि षष्ठेऽष्टमे वा ।

शङ्खः ।

गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः ।

ज्योतिःशास्त्रे ।

सीमन्तोन्नयनं कुर्य्यान्मासे षष्ठेऽष्टमेऽपि वा ।

पुन्नामर्क्षगते चन्द्रे बलिभिस्त्ववलोकिते ॥

मासे षष्ठेऽष्टमे वा बलिनि तदधिपे शीतगौ चेष्टदृष्टे

पुन्नामर्क्षोपयाते नरभवननवांशोदये कामिनीनां ।

कार्य्यं सीमन्तकर्म्म त्रिदशपतिगुरौ केन्द्रगे कोणगे वा

क्रूरैः केन्द्र-त्रिकोण-व्यय-निधनबहिर्गर्भपुष्टिं करोति ॥

गर्भपुष्ट्यादिशब्दार्थाः प्रासादाद्यारम्भकाले दर्शिताः ।

एतच्च सीमन्तोन्नयनं स्त्रीसंस्कारपक्षे सकृदेव कार्य्यं, यदाह हारीतः।

सकृत्सुसंस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।

यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत् ॥

गर्भसंस्कारपक्षे तु प्रतिगर्भमावर्त्तनीयं।

तथाच विष्णुः ।

सीमन्तोन्नयनं कर्म्म न स्त्रीसंस्कार इष्यते ।

केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुञ्जते ॥

अकृतसीमन्तायाः प्रसवे तु सत्यव्रत आह ।

स्त्री यदाऽकृतसीमन्ता प्रसूयेत कथञ्चन ।

गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ॥

इति सीमन्तोन्नयनकालः ।

---

## अथ जातकर्मकालः।

तत्रच शङ्खः।

जाते जातकर्म।

विष्णुः।

जाते वै दारके तु जातकर्म।

विष्णुः।

सञ्जाते जातकर्म च।

श्लोकविष्णुः।

जातकर्म ततः कुर्यात् पुत्त्रे जाते यथोदितं।

'यथोदितं' स्वगृह्योक्तं, 'ततः' स्नानानन्तरं।

तथाच संवर्त्तः।

जाते पुत्त्रे पितुः स्नानं सचेलन्तु विधीयते।

मनुः।

प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयत इति।

'नाभिवर्द्धनं' नाभिच्छेदनं।

हारीतः।

प्राक् नाभिच्छेदात् संस्कार-पुण्यार्थान् कुर्वन्ति छिन्नायामाशौचमिति।

'संस्कारः' जातकर्म, 'पुण्यार्थाः' दानानि।

वैजवापः।

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि।

दैवादतीतकालश्चेदतीते सूतके भवेत्—इति ॥

एतच्चाशौचमध्येऽपि कार्य्यं ।

यदाह प्रजापतिः ।

आशौचे तु समुत्पन्ने पुत्त्रजन्म यदा भवेत् ।

कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति ॥

ज्योतिःशास्त्रे ।

मृदु-ध्रुव-चर-क्षिप्रभेषु वारत्रये शुभे[१] ।

गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च ॥

'मृदूनि' चित्रानुराधा मृगशिर उत्तरात्रयं रोहिणी च। 'चराणि' पुनर्वसु-स्वाति-श्रवण-धनिष्ठा-शतभिषाः । 'क्षिप्राणि' हस्ताश्विनी-पुष्याः । 'भानि' नक्षत्राणि । केन्द्रस्तु प्रासादाद्यारम्भकाले दर्शितः ।

इति जातककर्मकालः ।

---

## अथ नामकरणकालः ।

अत्र पाराशरः ।

दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति।

विष्णुपुराणे ।

ततस्तु नाम कुरुते पितैव दशमेऽहनि ।

सोमः ।

दशम्यां प्रकाशनामकरणं ।

विष्णुः ।

---

(१) वारत्रयेऽपि चेति क० ।

आशौचव्यपगमने नामधेयं ।

शङ्खः ।

आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।

याज्ञवल्क्य-बृहस्पती ।

अहन्येकादशे नाम ।

यमः ।

नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत् ।

पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥ इति ।

अत्र च पितुः कथञ्चिन्नामकरणायोग्यत्वे कारयेदिति विधीयते।

अत एव शङ्खः ।

कुलदेवता-नक्षत्राभिसम्बद्धं पिता कुर्य्यादन्यो वा कुलवृद्ध इति। पितुः कथञ्चिदयोग्यत्वे अभावे वा कुलवृद्धः कुर्य्यात्, न तु योग्यस्य सद्भावे प्राग्दर्शितविष्णुवचनविरोधप्रसङ्गात् । अत्र केचित् 'कारयेत्' कुर्य्यादिति व्याचक्षते, तदयुक्तं, लक्षणायां कारणाभावात् । "पितैव कुर्य्यादिति वचनविरोधस्यापि परिपूरितत्वात्, लक्षणातश्च संकोचस्य युक्तत्वात् ।

भविष्यत्पुराणे ।

नामधेयं दशम्यान्तु केचिदिच्छन्ति पार्थिव ।

द्वादश्यां परराचौ वा मासे पूर्णे तथापरे ।

अष्टादशेऽहनि तथा वदन्त्येके मनीषिणः ॥

गृह्यपरिशिष्टे ।

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणं ।

अत्र च स्वगृह्यानुसारेण व्यवस्था, येषां तु तत्र कालविशेषो नोक्त-स्तेषां विकल्प एव। तत्र तत्र पूर्वकालासम्भवेऽप्युत्तरोत्तरो ग्राह्यः।

ज्योतिःशास्त्रे ।

मृदु-ध्रुव-चर-क्षिप्र-भेष्वेषामुदयेऽपि वा ।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म्म च नाम च ॥

मृद्वादीनि नक्षत्राणि जातकर्मकाले प्रदर्शितानि। केन्द्रशब्दार्थः प्रासादाद्यारम्भकाले दर्शितः।

इति नामकरणकालः ।

---

## अथ निष्क्रमणकालः ।

तत्र वाराहपुराणे ।

द्वादशेऽहनि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।

शङ्ख-लिखितौ ।

अत ऊर्द्ध्वं तृतीये मासि निष्क्रमणिका ।

याज्ञवल्क्य-बृहस्पती ।

मासे चतुर्थे कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।

तत्र किं कार्य्यमित्याकाङ्क्षायामाह लौगाक्षिः ।

तृतीये त्वर्द्धमासे दर्शनमादित्यस्य ।

यमः ।

ततस्तृतीये कर्त्तव्यं मासि सूर्य्यस्य दर्शनं ।

विष्णुः ।

चतुर्थे मास्यादित्यस्य दर्शनं ।

शङ्खः ।

चतुर्थे मासि कर्त्तव्यं बालस्यादित्यदर्शनं ।

यमः ।

चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ।

अत्रापि स्वगृह्यानुसारेण व्यवस्था । येषान्तु गृह्ये कालविशेषो न श्रूयते तैः सर्व्वे एते काला विकल्पेनोपादेयाः । तत्रापि पूर्व्वकालासम्भवे सत्युत्तरकालग्रहणम् ।

इति निष्क्रमणकालः ॥

---

## अथान्नप्राशनकालः ।

तत्र विष्णु-सोम-शङ्ख-बृहस्पति-याज्ञवल्क्याः ।

षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ।

यमः ।

ततोऽन्नप्राशनं मासि षष्ठे कार्य्यं यथाविधि ।

अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले ॥

लौगाक्षिः ।

षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा पूर्णे वा संवत्सरे प्राशनमर्द्धसंवत्सर इत्येके ।

अत्रापि नामकरणवत्स्वगृह्यानुसारेण व्यवस्था वेदितव्या ।

इत्यन्नप्राशनकालः ।

---

## अथ कर्णवेधकालः ।

ज्योतिःशास्त्रे ।

कार्त्तिके पौषमासे वा चैत्रे फाल्गुनकेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥
पुंनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदयेऽपि वा ।
दिनच्छिद्र-व्यतीपात-विष्टि-वैधृतिवर्जिते ।
शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥ इति ।

हस्ताश्विनी-स्वाति-पुनर्वसौ च
तिष्येन्दु-चित्रा-हरि-रेवतीषु ।
चन्द्रेऽनुकूले गुरु-शुक्रवारे
कर्णौ तु वेध्यावमरेड्यलग्ने ॥

'अमरेड्यः' बृहस्पतिः ।

तथा ।

पुष्येऽनुराधा श्रवणे च मैत्रे
पौष्णादितौ लाब्दसवासवार्के ।
शुध्यन्ति वेधादिरुजो भवन्ति
नो पीड्यते जातु शिशुः कदाचित् ॥

शुध्यत्यर्कदिने द्रुतं प्रशाम्यति स्यादार्द्रता कर्णयोः
सौरे बन्धुविभिन्नता श्रवणयोः षष्ठे सुते त्रुट्यति ।

इति कर्णवेधकालः ॥

---

## अथ चूड़ाकर्म्मकालः।

तत्र सोमः।

संवत्सरे चूड़ाकरणं।

विष्णुः।

तृतीयेऽब्दे चूड़ाकरणं।

लौगाक्षिः।

तृतीयवर्षस्य भूयिष्ठे गते चूड़ां कारयेत्।

बृहस्पतिः।

चूड़ाकर्म्म त्रिवार्षिके।

बैजवापः।

त्रिवर्षे चूड़ाकरणम्।

पारस्करः।

संवत्सरस्य चूड़ाकरणं तृतीये वाऽप्रतिहते।

मनुः।

चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

शाङ्खायनगृह्ये।

संवत्सरे चूड़ाकर्म्म तृतीये वा वर्षे।

यमः।

ततः संवत्सरे वृत्ते चूड़ाकर्म्म विधीयते।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

शङ्ख-लिखितौ।

तृतीये वर्षे चूड़ाकर्म्म पञ्चमेऽपि वा ।

शङ्ख-याज्ञवल्क्यौ ।

चूड़ाकर्म्म यथाकुलं ।

आश्वलायनगृह्ये ।

तृतीये वर्षे चौलं यथाकुलधर्मं वा ।

लौगाक्षिः ।

शुक्लपक्षस्य पुण्याहे पर्व्वणि वा चूड़ाकरणम् ।

वैजवापगृह्ये ।

उदगयने आपूर्य्यमाणपक्षे पुण्याहे चूड़ाकर्म्म ।

आश्वलायनगृह्ये ।

उदगयने आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चूड़ाकर्म्म ।

आपस्तम्बः ।

जन्मावधि तृतीये वर्षे चौलं पुनर्वसाविति ।

व्यासः ।

आश्विनं श्रवणं स्वाती चित्रा पुष्य-पुनर्वसू ।
धनिष्ठा-रेवती-ज्येष्ठा-मृग-हस्तेषु कारयेत् ।
वार-नक्षत्रयोगेषु शुभेषु करणेषु च ॥
हस्तत्रयं मृगशिरः श्रवणत्रयञ्च
पुष्याश्विनी-स्व-शुभभानि पुनर्वसौ च ।
चौरे तु कर्म्मणि हितान्युदयक्षणे च
युक्तानि चोडुपतिना यदि शस्ततारा ॥

विषयविशेषः सर्व्वं नक्षत्रे ज्ञेयः ।

तथाच ज्योतिःशास्त्रे ।

नृपाज्ञया ब्राह्मणसम्मते च
बन्धस्य मोक्षे क्रतु-दीक्षणे च ।
विवाहकाले मृत-सूतके च
सर्व्वेषु शस्तं क्षुरकर्म तेषु ॥

'तेषु' नक्षत्रेषु ।

इति चूड़ाकरणकालः ॥

---

## अथ चूड़ाकर्म्मनिषिद्धकालः ।

व्यासः ।

नक्षत्रे न तु कुर्व्वीत यस्मिन् जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्य्यं नैवाग्नेयेषु भारत ।
दारुणेषु च सर्व्वेषु दुष्टतारन्तु वर्जयेत् ॥
वारं शनैश्चरादित्य-भौमानां रात्रिमेव च ।
तिथिं प्रतिपदं रिक्तां विष्टिञ्चैव विवर्जयेत् ॥

इति चूड़ाकर्मनिषिद्धकालः ।

---

## अथ विद्यारम्भकालः ।

तत्र मार्कण्डेयः ।

प्राप्ते तु पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने ।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीं ॥

रिक्तां पञ्चदशीञ्चैव शौरि-भौमदिनं तथा ।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीं चापि सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्याञ्च विशेषतः ॥
ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत् ।
अष्टमीद्वितयं चैव पक्षान्ते च दिनत्रयं ॥
आशौच इन्द्रयात्रायां भूकम्पे राहुदर्शने ।
व्यतीते चाप्यहोरात्रमुल्कापाते तथैव च ॥ इति ।

इति विद्यारम्भकालः ।

---

## अथोपनयनकालः ।

अत्र लौगाक्षिः ।

सप्तमे वर्षे ब्राह्मणस्योपनयनं, नवमे राजन्यस्यैकादशे वैश्यस्य ।

बौधायनः ।

गर्भादिसंख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेत्, तदधिकेषु च राजन्यं, तस्मादधिकेषु च वैश्यं ।

शङ्ख-लिखितौ ।

गर्भाष्टमे ब्राह्मणमुपनयेत् राजन्यमेकादशे द्वादशे वैश्यम् ।

पैठीनसिः ।

गर्भपञ्चमे ब्राह्मणमुपनयेत् गर्भाष्टमे वा, गर्भैकादशे राजन्यं गर्भद्वादशे वैश्यं गर्भषोड़शे वा ।

देवलः ।

प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे उपनयनार्हो भवति।

मनु-शंखौ।

गर्भाष्टमेषु कुर्वन्ति ब्राह्मणस्योपनायनं।

एकादशे क्षत्रियस्य वैश्यस्य द्वादशे स्मृतं॥

विष्णुः।

गर्भाष्टमाब्दे कुर्वीत ब्राह्मणस्योपनायनं।

गर्भस्यैकादशे राज्ञो गर्भस्य द्वादशे विशः॥

विश्वामित्र-याज्ञवल्क्यौ।

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं।

राज्ञामेकादशे सैके विशामेके यथाकुलं॥

उपनयनं ब्राह्मणस्य गर्भग्रहणादारभ्य जन्मतो वाष्टमे वर्षे कार्य्यं, एकेन सह वर्त्तते इति सैकं तस्मिन्नेकादशे द्वादश इत्यर्थः, एके त्वाचार्या मन्यन्ते, यथाकुलं उपनयनं कार्यमित्यर्थः, अन्ये त्वेवं व्याचक्षते, कुलस्थित्या गर्भाष्टमादिव्यवस्थां केचिन्मन्यन्ते, अत्र केचिदुपनायनशब्देनेहोपनयनमभिधीयत इत्याहुः, तदयुक्तं, उपनयनविषयप्रयोजकव्यापारस्योपनायनशब्दवाच्यत्वात् लक्षणायाश्च कारणाभावात्।

अत एवाह बुधः।

गर्भाष्टमे वर्षे वसन्ते ब्राह्मणो आत्मानमुपनाययेत। एकादशे क्षत्रियो ग्रीष्मे द्वादशे वैश्योवर्षासु। तस्मादुपनायनादुपनयनमपि विधीयते।

बृहस्पतिः।

गर्भाष्टमेऽब्दे विप्रस्य क्षत्रस्यैकादशे तथा ।
वैश्यस्य द्वादशे वर्षे कार्यं मौञ्जीनिबन्धनं ॥

उपनयनं प्रकृत्य शङ्ख-लिखितौ ।

द्विजातीनां वसन्तो ग्रीष्मः शरदितिकालः ।

वसन्तोग्रीष्मः शरदिति ऋतवोवर्णानुपूर्व्येण ।

आपस्तम्बः ।

वसन्ते ब्राह्मणमुपनयेत् ग्रीष्मे राजन्यं शरदि वैश्यं ।

तथा माघादयः पञ्च मासा उपनयने ग्राह्याः ।

तथाच ज्योतिःशास्त्रे ।

माघादिषु तु मासेषु मौञ्जी पञ्चसु शस्यते ।

एतच्च वर्णत्रयसाधारणं, तत्र युक्तं, तत्रैव ।

ऋतुर्वसन्तः शुभदोऽग्रजानां
ग्रीष्मोनृपाणाञ्च शरद्विशाञ्च ।
व्रतस्य बन्धे यदिवाखिलानां
माघादयः पञ्च भवन्ति मासाः ॥

एतच्च सर्ववर्णेषु ऋतुविषयं ।

यत उक्तं रत्नकोशे ।

यदि मासविशेषेण सर्वज्येष्ठस्य पुत्रक ।
उपनीतस्य विप्रस्य जड़त्वं मृत्युरेव च ॥

यजुःशाखिनां सर्वत एवोपनयनं पुनर्वसन्तग्रहणं नियमार्थत्वा-दित्युक्तं ।

धर्मभाष्ये ।

चैत्रे वैशाखे वसन्ते च।

तथाच श्रुतिः।

मधुश्च माधवश्च वासन्तिकावृतू यदा मीन-मेषयोर्वसन्तः।

तथाच ज्योतिःशास्त्रे।

मृगादिराशिद्वयभानुभोगात्
षड़र्त्तवः स्युः शिशिरो वसन्तः।
ग्रीष्मश्च वर्षा च शरच्च तद्वत्
हेमन्तनाम्ना कथितोऽत्र षष्ठः॥

'मृगः' मकरः।

बौधायनः।

मीन-मेषयोर्मेष-वृषभयोर्वा वसन्तः।

काम्योपनयनकालमाह गौतमः।

नवमे पञ्चमे वा काम्यं गर्भादिसङ्ख्या वर्षाणां।

एतच्च ब्राह्मणविषयं।

यदाहाङ्गिराः।

ब्रह्मवर्चसकामस्य पञ्चमेऽब्देऽग्रजन्मनः।
आयुःकामस्य नवमे कार्यं मौञ्जीनिबन्धनं॥

मनुः।

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।

क्षत्रिय-वैश्ययोस्तु काम्योपनयनकालमाहाङ्गिराः।

षष्ठे तथा द्वादशे च राज्ञो वृद्धिबलायुषोः।
ईहायुषोस्तु वैश्यस्य अष्टमे च चतुर्दशे॥

'ईहा' कृष्यादिविषयचेष्टा । अत्र पूर्वार्द्धोक्त क्रम आदरणीयः । तथाच मनुः ।

राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ।

आपस्तम्बः ।

अथ काम्याः, सप्तमे ब्रह्मवर्चसकामं, अष्टमे आयुःकामं, नवमे तेजःकामं, दशमे अन्नाद्यकामं, एकादशे इन्द्रियकामं, द्वादशे पशुकामं, एतच्च वर्णत्रयसाधारणं तदुपनयनानन्तरमस्य विधानादित्युक्तं तद्भाष्ये। तदयुक्तं । ब्रह्मवर्चसकामस्येत्यादिपूर्वप्रदर्शितमन्वङ्गिरसोर्वचनविरोधात्तस्मात् अत्राद्यविधिद्वयमब्राह्मणविषयमुत्तरन्तु विधिचतुष्टयं बाधकाभावाद्वर्णत्रयसाधारणमिति द्रष्टव्यं।

ज्योतिःशास्त्रे ।

हस्तत्रये पुष्य-धनिष्ठयोश्च
पौष्णाश्वि-सौम्यादिति-विष्णुभेषु ।
शस्ते तिथौ चन्द्रबलेन युक्ते
कार्यौ द्विजानां व्रतबन्ध-मोक्षौ ॥

गुरुर्भृगुसुतो भूमिपुत्रः शशधरात्मजः ।
स्युरेते ऋग्यजुःसामाथर्वणामधिपाः क्रमात् ॥
शाखाधिपे बलिनि केन्द्रगते तु मौञ्जी-
बन्धस्तदीयदिवसेऽथ सुखाप्तये च ।
अस्मिन् बलेन रहिते तु पुनर्द्विजानां
स्याद्दर्णसङ्करइति प्रवदन्ति सन्तः ॥

केन्द्रशब्दो व्याख्यातः प्रासादाद्यारम्भकालनिरूपणे ।

हस्तत्रये शुभतिथौ व्रतबन्धराशिवलेन स्याद् द्विजानां मौञ्जी-बन्धः स्मरभवेद्मय क्रियाहीनः[१]।

भवेत्क्रूरैर्जडैः पापः पाण्डु-यक्ष्मामयान्वितः।
मूर्खः शुक्रादिभोगेषु क्रमेणोदयवर्त्तिषु॥
षड्कर्मकृत्प्रवरधीः सुरराज्यपुज्यः
स्याद्दीचितो भृगुसुतेऽतिसुखी धनी च।
अध्यापकः शशिसुते रविजेऽन्यसेवी
राजोपजीव्यहिमरोचिषि कर्कटस्थे॥
शस्त्रास्त्रजीवी निपुणोवैश्यवृत्तिस्तु जायते।
कण्टकस्थायिनि चोणीनन्दने व्रतबन्धने॥
गुरौ केन्द्रे गते शुक्रे नव-पञ्चमवर्त्तिनि।
चन्द्र-शुक्रांशगे सर्वे सर्ववेदी भवेन्नरः॥
सप्तांशगे कृतघ्नोविषयात् साचाद्भवेगुरुद्रोही।
विद्यार्थी शीलसंयुक्तः षष्ठेऽष्टमगे व्यसुः शशिनि॥
जीवे सार्के निर्गुणो वित्तहीनः
क्रूरः सौरेश्चान्द्यगस्यापि सौम्यः।
भानोः पुत्रे नाभासः स्या-
च्छुक्रेन्दुः सौम्यवत्सर्वदा मे[२]॥

रत्नकोषे।

---

(१) हस्तत्रय इत्यादिः क्रियाहीन इत्यन्तः पाठः सर्व्वेष्वस्मल्लब्धादर्श-पुस्तकेषु एकजातीय एव वर्त्तते परन्त्वयं सर्व्वांशे न परिशुद्धः।
(२) सप्तांशग इत्यादिः सर्व्वदा मे इत्यन्तः पाठः चादर्शपुस्तकानाम-परिशुद्धत्वेन न सम्यक् परिशोधितः।

नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।
कर्त्तव्यं चोपनयनं नानध्याये गलग्रहे ॥

राशेः प्रथमभागस्थितः सूर्य्यः 'निरंशः' ।

त्रयोदशीचतुष्कञ्च सप्तम्यादित्रयं तथा ।
चतुर्थी काकिनी प्रोक्ता अष्टावेते गलग्रहाः ॥

इत्युपनयनविहित-निषेधकालौ ।

---

## अथोपनयनगौणकालाः ।

तत्र मनुः ।

आ षोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥

आङयमभिविधौ ।

आह व्यासः ।

औपनायनिकः कालः परः षोड़शवार्षिकः ।
द्वाविंशतिपरोऽन्यः स्याच्चतुर्विंशतिमः परः ॥

अवन्तिमिहिरोऽपि ।

छन्दःसुपदाक्षरवदस्य समुदाय उपनयनं ।

ब्राह्मणस्य गायत्र्योपनयनं तस्याश्चैकस्मिन् पादेऽष्टाक्षराणि ।

एवं च समुदाये षोड़शे वर्षे पूर्णे उपनयनं ।

एतच्चाभिविधौ उपपद्यते ।

अस्याप्यतिक्रमे पातित्यं यत्तदाह यमः ।

सावित्रीपतिता व्रात्याः परिहार्याः प्रयत्नतः ।

याज्ञवल्क्यः ।

आ षोड़शाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्म-क्षत्र-विशां काल उपनायनिकः परः ॥
अत ऊर्द्ध्वं पतन्त्येते सर्व्वधर्म्मवहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृताः क्रमात् ॥

शङ्ख-लिखितौ ।

आ षोड़शाद्ब्राह्मणस्यानतीतः कालो भवति आ द्वाविंशाद्राजन्यस्य आ चतुर्विंशाद्वैश्यस्यातो निष्क्रान्तकालाः पतन्तीति श्रुतिः । पूर्व्वपूर्व्वोक्तरकालातिक्रमेषु पतिता भवन्ति व्रात्याः ।

शङ्खः ।

षोड़शाब्दानि विप्रस्य राजन्यस्य द्विविंशतिः ।
विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता ।
नातिवर्त्तेत सावित्री अत ऊर्द्ध्वं निवर्त्तते ॥
विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्याः सर्व्वधर्म्मवहिष्कृताः ॥

गौतमः ।

आ षोड़शाद्ब्राह्मणस्य नात्ययः आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाच्च वैश्यस्य ।

बौधायनः ।

आ षोड़शाद्द्वाविंशाच्चतुर्विंशादनत्ययः ।

पैठीनसिः ।

द्वाविंश-षोड़श-चतुर्विंशतिष्वेत्यतीता विरुद्धकाला भवन्ति ।

ब्राह्मण-क्षत्रियविशाम्भेदकालो व्याख्यातः ।

यमः ।

आ षोड़शात् तथा वर्षाद्ब्राह्मणस्याकृतात्मनः ।
सावित्री नातिवर्त्तेत अत ऊर्ध्वं निवर्त्तते ॥
आ द्वाविंशात् क्षत्रियस्य त्रिष्टुप्छन्दो निवर्त्तते ।
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥

इत्युपनयनगौणकालः ।

---

## अथानध्यायनिर्णयः ।

तत्रानध्यायाध्ययने दोषमाह लिखितः ।

छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितम् ॥
तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशोबलम् ।
सर्वमादाय गच्छन्ति वर्जयन्तीप्सितं फलम् ॥

शङ्खः ।

छिद्रेष्वेवावतिष्ठन्ति ये केचित्पुरुषादयः ।
तत्रस्था घ्नन्ति तद्ब्रह्म ब्राह्मणस्याप्यमेधसः ॥
तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशोबलं ।
सर्वमादाय गच्छन्ति येऽनध्यायेष्वधीयते ॥

हारीतः ।

छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ।

हिंसन्ति राक्षसास्तेषु तस्मादेतानि वर्जयेत् ॥

विष्णुः ।

यस्मादनध्यायादधीतवेदमात्रं न फलप्रदम् तत्रानध्यायेऽध्ययने-नायुषः परिचयो गुरु-शिष्ययोश्च तस्मादनध्यायान् वर्जयेत् ।

इन्द्र-नारदसंवादे ।

अनध्यायेष्वधीयानान् शक्र किं न हनिष्यसि ।
असुरास्ते दुरात्मानो ब्रह्मघ्ना ब्रह्मदूषकाः ॥
अनध्यायेष्वधीयन्ते न ते यान्ति स्ववैदिकं ।
मृताः स्वर्गं न गच्छन्ति किं नारद न ते हताः ॥

यमः ।

छिद्राण्याहुर्द्विजातीनां अनध्यायान् मनीषिणः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितं ॥
आयुः प्रजां पशून्मेधां कृतमित्यकृतञ्च तत् ।
अनध्यायेष्वभ्यसता तेन ब्रह्म हतन्तथा ॥

तथा ।

अनध्यायेष्वध्ययने प्रज्ञामायुः प्रजां स्त्रियः ।
ब्रह्म वीर्यं श्रियन्तेजो निकृन्तति यमः स्वयं ॥
मन्त्रवीर्यक्षयभयादिन्द्रो वज्रेण हन्ति च ।
ब्रह्मराक्षसतां याति नरत्वं न पुनर्भवेत् ॥
आयुरस्य निकृन्तामि प्रजां मेधां हराम्यहं ।
य उच्छिष्टाः प्रवदन्ति स्वाध्यायान् वाप्यधीयते ॥
अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।

हन्ति पञ्चदशी मेधां तस्मात् पर्वाणि वर्जयेत् ॥
प्रजापतौ हि तिष्ठन्ति सर्वा विद्याः सुपर्वसु ।
तस्माद्धर्मार्थकामो वा नैताः पर्वसु कीर्त्तयेत् ॥

मनुः ।

अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी ।
ब्रह्माष्टमी-पौर्णमास्यौ तस्मात्ताः परिवर्जयेत् ॥

गौतमः ।

अमावास्यायाञ्चाहोरात्रं द्व्यहं वा यदा द्वे अमावास्ये तदा द्व्यह-मनध्यायः ।

हारीतः ।

प्रतिपत्सु चतुर्द्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्यायेऽद्य सर्व्व्यां नाधीयीत कथञ्चन ॥

स्मृत्यन्तरे च ।

श्वोऽनध्याये सत्यद्य रात्रावनध्यायः एकानध्याययुग्मेषु त्वपररात्रे नानध्यायः अनध्याययुग्मात् पूर्व्वदिनात्पररात्रे चेत्येके ।

पारस्करः ।

वाते अमावास्यायामिति ।

सर्व्वानध्याये श्रुतिनिषेधमित्यनुवृत्तौ याज्ञवल्क्यः ।

पञ्चदश्यां चतुर्द्दश्यां अष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्ता वा श्राद्धिकं प्रतिगृह्य वा ॥

'राहुसूतके' चन्द्र-सूर्य्योपरागे ।

अत्र च त्रिरात्राकालिकाहोरात्राणां विकल्पः ।

तथाच मनुः।

प्रतिगृह्य द्विजोविद्वानेकोद्दिष्टस्य केतनं।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञोरन्यच सूतके॥
यावदेकोद्दिष्टमन्धौ गन्धोलेपश्च तिष्ठति।
विप्रस्य विदुषोदेहे तावद्ब्रह्म न कीर्त्तयेत्॥

धूप-चन्दन-गन्धादि यावत्तिष्ठति तावदनध्यायः, 'केतनं' निमन्त्रणं, एकमुद्दिश्य एकोद्दिष्टं।

शङ्खः।

उपाध्याये राजनि च श्रोत्रिये च मृते सब्रह्मचारिणि चन्द्रार्कयोः राहुदर्शने शक्रध्वजप्रपतने आचार्य्ये च मृते त्रिरात्रं।

गौतमः।

अकालिकनिर्घात-भूकम्प-राहुदर्शनोल्कापातेषु ऋतुसन्धिषु ग्रस्तास्तमिते अहमनध्यायमाहुः।

'ऋतुसन्धिषु' ऋतूनां वसन्तादीनां सन्धिषु प्रतिपत्सु।

तथाच रामायणे रामं प्रति हनुमद्वाक्यं।

सा स्वभावेन तन्वङ्गी त्वद्वियोगाच्च कर्षिता।
प्रतिपत्पाठशीलस्य विद्येव तनुताङ्गता॥

लोकगौतमः।

प्रदोषे च त्रयोदश्यां नाध्येयं प्रतिपत्सु च।
अमावास्याष्टकायुग्मे सन्ध्ययोरुभयोरपि।
अमावास्याप्रतिपदि क्षिप्रं विद्या प्रणश्यति॥

अह्नोः सन्धिः 'आह्निकं', तद्भक्तं प्रतिगृह्य चुनिग्रमनध्याय इत्यर्थः[१]।

तथाच वशिष्ठः ।

फलान्यापस्तिला भक्ष्या यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायः पाण्यास्या: ब्राह्मणाः स्मृताः ॥

एतच्चैकोद्दिष्टव्यतिरिक्तविषयं तत्र पूर्वोदाहृतमनुवचनेन त्रिरात्रविधानात् ।

गौतमः ।

श्राद्धिनामकालिकं भोक्तृणां प्रतिग्रहीतृणां च अकृताब्नश्राद्धयोगे च ततश्चाकालिकाहोरात्रयोर्विकल्पः ।

स्मृत्यन्तरे ।

नवश्राद्धभुक्तौ तु अन्नजरणपर्यन्तं ।

मनुः ।

प्राणि वा यदि वाप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत् ।
तदालभ्याप्यनध्यायः पाण्यास्याः हि द्विजाः स्मृताः ॥

शातातपः ।

पञ्चदश्यां चतुर्दश्यामष्टकासु महोत्सवे ।
प्रदोषे च त्रयोदश्यामष्टम्यां प्रतिपद्यपि ॥

पुराणात् ।

मेधाकामस्त्रयोदश्यां चतुर्थ्याञ्चैव सर्वदा ।
सप्तम्यान्तु प्रदोषे तु न स्मरेन्नापि कीर्त्तयेत् ॥

---

(१) अत्राह्निकशब्दव्याख्यानेन पूर्वं आह्निकशब्दघटितः कश्चित् पाठः पतितः प्रतिभाति ।

प्रजापतिः।

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिकाः।
प्रदोषे न त्वधीयीत तृतीया नवनाडिकाः॥

अर्द्धरात्रघटिकायां नेत्यर्थः। नवनाड़िका निशायामिति ज्ञेयं। 'प्रदोषे' निशाप्रथमप्रहरे।

गौतमः।

निशायां चतुर्मुहूर्त्तं।

एतच्च त्रयोदशीविषयं।

तथाचोशनाः।

त्रयोदश्यां प्रथमांश्चतुर्यामान् नाधीयीतेति।

दक्षः।

प्रदोषपश्चिमौ यामौ वेदाभ्यासरतो नयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्प्यते॥

आपस्तम्बः।

श्रावण्यां पौर्णमास्यां अध्यायमुपाकृत्य मासम्प्रदोषे नाधीयीतेति।

उदयेऽस्तमये वापि मुहूर्त्तत्रयगामि यत्।
भेदितं तदहोरात्रं अनध्यायविदोविदुरिति॥

साम्यविषयमेतत्।

दिनान्तैकमुहूर्त्तं या या तिथिः क्षयगामिनी।
त्रिमुहूर्त्ताधिका ज्ञेया या तिथिर्वृद्धिगामिनी।
नक्तं तिथिवद्ग्राह्यं विपरीतमथोदये॥

इति वचनात्।

केचिदाहुः क्वचिद्देशे यावद्वेदितनाडिकाः ।
तावदेव त्वनध्यायो न तन्मिश्रदिनान्तरे ॥
उपवास-व्रतादीनां तिथीनाहुस्तथैव ते ।
चतुर्थ्यां पूर्वरात्रेषु नवनाडिषु दर्शने ॥
नाध्येयं पूर्वरात्रे स्यात् सप्तमी च त्रयोदशी ।
अर्द्धरात्रात्परं स्याच्चेदध्येयं पूर्वरात्रके ॥

नाधीयीतेत्यनुवृत्तौ शङ्खः ।

अष्टम्यां प्रदोष इति ।

पैठीनसिः ।

शुक्लचतुर्दश्यां सर्वासु चाष्टमीषु नक्तमनध्यायोऽष्टकावर्जं ।

पुराणात् ।

महानवमी द्वादशी च माघमासस्य सप्तमी ।
प्रपठन्तं तथा हन्ति ध्रुवं विद्या विनाशयेत् ॥

नृसिंहपुराणात् ।

महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाक्षयतृतीयायां शिष्यं नाध्यापयेद्बुधः ।
माघमासे तु सप्तम्यां रथाख्यायान्तु वर्जयेत् ॥

'महानवमी' अश्वयुक्शुक्लपक्षस्य। 'महाद्वादशी' कार्त्तिकशुक्लपक्षस्य।

स्मृत्यन्तरे ।

भाद्रपदे मघा-भरण्योरनध्यायः सश्रवणयोरेकादशी-द्वादश्योश्च आषाढी-कार्त्तिकी-फाल्गुनीसमीपस्थद्वितीयासु च अपरपक्षान्ते तथा द्वितीयायां च ।

नाधीयीतेत्यनुवृत्तौ गौतमः।

कार्त्तिकी-फाल्गुन्याषाढीपौर्णमासीप्रभृतित्रिरात्रमित्यर्थः[१]।

अष्टकाशब्देनाष्टकाकर्माङ्गभूतसप्तम्यादित्रिरात्रमुपलक्ष्यते।

अत्राष्टकां मघान्तामेवानध्यायनिमित्तामेवाहुः।

पैठीनसिः।

प्रौष्ठप्रभृतयः कृष्णे भवास्तिस्रोऽष्टका मार्गशिरःप्रभृतय इत्येके।

शौनकस्तु।

हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्याह।

मनुः।

अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु।

नारदीये।

अयने विषुवे चैव शयने बोधने हरेः।

अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु॥

मन्वादयो युगादयश्च तन्निर्णये दर्शिताः।

निशाद्वयं दिवा रात्रौ संक्रमे दिवसद्वयं।

अनध्यायं प्रकुर्वीत यावत्सोपपदा तिथिः॥

तथा।

सिता ज्यैष्ठे द्वितीया तु आश्विने दशमी सिता।

चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः॥

अहमित्यनुवृत्तौ याज्ञवल्क्यः।

---

(१) ईदृशव्याख्यानेन पूर्व्वं गौतमोक्तः पाठः लिपिकरप्रमादात् पतितः इत्यनुमीयते।

उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते इति ।

स्मृत्यन्तरे ।

वेदसमापने प्रथमसन्ध्यासु तदहोरात्रं परेद्युरनध्यायः, द्वितीयादिसन्ध्यासु तु द्युनिशं काण्डोपक्रमणे वामाष्टकस्य काण्डसमापने वापिष्टकस्य मनुष्यप्रकृतीनाञ्च देवानां यजुर्भुक्त्वैकपर्युषितैस्तण्डुलैरासमासेन वानध्यायेन, तथौषधिवनस्पतिमूलफलैर्यस्काण्डमुपाचं कुर्वीत यस्य वानुवाक्यं कुर्वीत न तदहरधीयीतोपाकरण-समापनयोश्च ।

मनुः ।

यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ।
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतमिति ॥

उभयतोदिवसा रात्रिः पक्षिणी, एतेषां पक्षाणां स्वगृह्यानुसारेण व्यवस्था ।

मनुः ।

विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥

एतेषु विद्युदादिषु प्रत्येकमाकालिकं निमित्तकालादारभ्य अपरेद्युर्यावत् स एव कालस्तावदनध्याय इत्यर्थः । अत्र विद्युदादित्रये वर्षाभ्योऽन्यत्र सन्ध्याकालेऽनध्यायः ।

यदाह स एव ।

एतानभ्युदितान् विद्यात् यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायं अनृतौ चाभ्रदर्शने ॥

'प्रादुष्करणं' विहरणं, तेन न सन्ध्याकाललक्षणा ।

आकालिकेत्यनुवृत्तौ गौतमः ।

स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु उल्कायां च सर्वदाकालिक एवानध्यायः ।

यदाहापस्तम्बः ।

उल्कायामग्न्युत्पाते च सर्वासां विद्यानामाकालिकः ।

मनुः ।

चौरैरुपद्रुते ग्रामे संभ्रमे चाग्निकारिते ।

आकालिकमनध्यायं विन्द्यात्सर्वाद्भुतेषु च ॥

'अद्भुतेषु' रुधिरवर्षेषु ।

यथाह वशिष्ठः ।

दिक्पर्वतानां दाहाखेदभङ्गप्रपातेषूपल-रुधिर-पांशुवर्षेष्वाकालिकं । एतत् प्रबलपांशुविषयम् ।

याज्ञवल्क्यवचनन्त्वाकालिकानध्यायप्रतिपादकमल्पपांशुविषयं ।

स्मृत्यन्तरे ।

अग्न्युत्पाते चाकालवृष्टौ चाकालिकोऽनध्यायः ।

शङ्खः ।

निर्घात-भूमिवेगोल्कापात-दिग्दाह-पांशु-शोणित-मांसास्थिक-मदधिलाज-गौरवर्षेषु स्वाध्ययनं कृत्वाभ्यञ्जनाकुष्टवान्तश्रमदुःस्वप्नदर्शनेष्वेकोद्दिष्टसूतकमृतकेष्वाद्यं प्रायश्चित्तं कृत्वा ब्राह्मणमनेष्वादीनि दत्वानुज्ञाप्याधीयीरन्।

विद्युदादित्रययौगपद्ये तु त्र्यहमनध्यायः ।

तथाच त्रिरात्रमित्यनुवृत्तौ गौतमः ।

वर्षविद्युत्स्तनयित्नुसन्निपात इति ।

एतद्वर्षाकालादन्यत्र ।

यदाहापस्तम्बः ।

विद्युत्स्तनयित्नुवृष्टिष्वपर्त्तौ यत्र सन्निपातेषु त्र्यहमनध्यायः यावद्भूमिर्व्युदकेत्येके(१) एकेन द्वाभ्यां चैतेषामाकालम् ।

अत्र भरद्वाजोऽपि ।

अग्न्युत्पाते पांशुवर्षे ग्रामेऽनध्ययनं भवेत् ।
आकालिकं त्रिरात्रन्तु सविद्युत्स्तनयित्नुके ॥

पैठीनसिः ।

एकादशाहं भुक्त्वा रात्राविन्द्रधनुर्दृष्ट्वा वज्रपतनादाचार्यमरणात् सूर्याचन्द्रमसोरुपप्लवाल्केतुदर्शन-निर्घात-भूमिचलनोदकेष्वेकस्मिन् त्रिरात्रं । श्रोत्रियमरणे सन्ध्यास्तमिते करकापतने नीललोहित-प्रादुर्भावे च ।

यदा तु वर्षास्वेव सन्ध्यायां विद्युत्स्तनितञ्च तदा सज्योतिरनध्यायः ।

तथाच मनुः ।

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने ।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥

प्रातःसन्ध्यायां निमित्तोत्पादे सज्योतिर्यावत्सूर्यस्तावदेवानध्या-

(१) यावद्भूमिरत्यनुदकेत्येक इति ख० ।

योर्दिवैवेत्यर्थः। अपरस्यां तु यावन्नक्षत्राणि तावदेव। 'शेषे' वृष्टौ, यथा दिवानध्यायस्तथा रात्रावपीत्यर्थः।

हारीतः स्तनिते विशेषमाह।

सायंसन्ध्यास्तनिते रात्रौ नाधीयीरन्, प्रातःसन्ध्यास्तनिते त्वहोरात्रम्।

आपस्तम्बः।

सन्धौ घनस्तनिते रात्रौ स्वप्नपर्यन्तं विद्युत्युषसि यावता वा कृष्णा रोहिणी वा सर्पते शम्याप्रासाद्विजानीयादेतस्मिन् काले विद्योतमानायां सप्रदोषमहरनध्यायोऽह्नोऽपररात्रे स्तनयित्नुनार्द्धरात्रादित्येके गवाश्वावरोधा इति।

'सन्धौ' अहोरात्रसन्धिलक्षितकाले, 'घनस्तनिते' मेघध्वाने, रात्रिमनन्तरां नाधीयीत 'स्वप्नपर्य्यन्तं' स्वप्नान्तं यावत्, अन्येद्युरुत्थानादित्यर्थः। 'उषसि' उषस्यपररात्रे, 'विद्योतमानायां विद्युति',' अथवा शम्याख्यप्रासपरिमिते देशे स्थिता गौः कृष्णा लोहिता वा सर्पति यदा तदा प्रदोषसहितमहरनध्यायोऽह्नोऽपररात्रे स्तनयित्नुना गर्जितेन निमित्तेन सप्रदोषमहरनध्याय इत्यर्थः(१)।

निर्घातादिषु वर्षास्वाकालिकोऽनध्यायो मनुनोक्तः।

निर्घाते भूमिचलने ज्योतिषां चोपसर्जने।
एतानाकालिकान् विद्यादनध्यायानृतावपि॥

---

(१) आपस्तम्बग्रन्थादुद्धृतः पाठः तद्व्याख्यापाठश्च आदर्शानुरूप एव मुद्रितः, परन्त्वयं न सम्यक् परिशुद्धत्वेन प्रतिभाति।

'निर्घातः' आन्तरिक्षोध्वनिविशेषः, 'ज्योतिषामुपसर्ज्जनं' सूर्याचन्द्रमसोः परिवेषः, ग्रहयुद्धादि वा ।

याज्ञवल्क्यः ।

सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥

'द्युनिशं' अहोरात्रं। तत्श्चाकालिकाहोरात्रयोरत्र विकल्पः ।

यत्तु मनुवचनं ।

शक्रध्वजनिपाते च उल्कापाते तथैव च ।
अनध्यायस्त्रिरात्रन्तु भूमिकम्पे तथैवच ॥ इति ।

तदुल्का-विद्युतोः सहभावे वेदितव्यं, उल्का-विद्युत्समासे त्रिरात्रं, "कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने। एतौ वर्षावनध्यायावध्यायज्ञाः प्रचक्षते"॥ कर्णमन्तरेण श्रवणासम्भवादतिशयोऽत्र विवक्षितः, दिवा वातसमूहन इति वा पाठः ।

याज्ञवल्क्यः ।

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरु-बन्धुषु ।

गुरुरत्राचार्य्योन मुख्यः तत्र दशाहविधानात्, "त्रिरात्रमाहुराशौचं आचार्य्ये संस्थिते सति"। बन्धवोऽत्रासपिण्डा ग्राह्याः सपिण्डेषु दशाहविधानात् ।

शिष्यर्त्विगादिषु वसिष्ठेनाहोरात्रमुक्तं ।

आचार्यपुत्त्रशिष्यभार्यास्वहोरात्रमृत्विगयोनिसम्बद्धेषु ।

'अयोनिसम्बद्धाः' मातुलादयः ।

अहोरात्रमित्यनुवृत्तौ गोभिलः ।

सब्रह्मचारिणि प्रेते प्रेते भूमिपताविति ।

खत्यन्तरे शवानुगमनपरिचरणेषु चकोरशवदर्शने चाहोरात्रं ।

यमः ।

न गर्जिते नास्तमिते तथा चटचटायिते ।

न चन्द्रार्कोपरागे तु न राजव्यसने तथा ।

समानविद्ये च मृते तथा सब्रह्मचारिणि ॥

श्वादीनामध्येतृमध्यगमनेन गौतमेनानध्ययनमुक्तं ।

अन्तरा गमने पुनरुपसदनं नकुलसर्प-मण्डूक-मार्जाराणां त्र्यह-मुपवासो विप्रस्य प्राणायामो घृतप्राशनं चेतरेषां श्मशानाध्ययने चैवं येन केनचिदन्तरा गमने कृते उपसदनं कार्यं ।

'उपसदनं' पाणिना पाणिमुपसंगृह्येत्यादिना यदत्यहं विहितं पुनस्तदेव कार्यं, श्वाद्यन्तरागमने शिष्योपाध्याययोस्त्र्यहमुपवासाः सहवासौ भवतोऽपि चिरात्रमेव ।

तथाच हारीतः ।

श्व-गोमायु-मार्जार-सर्प-नकुल-मूषिकानुवृत्तावेतेषामेवाधीया-नानामन्तरा गमने त्रिरात्रमुपवासः त्र्यहस्य विनिवसेदित्युक्तत्वात् । तथाच त्र्यहमनध्यायः ।

त्र्यहमुपवासासमर्थं तु वसिष्ठ आह ।

मार्जार-नकुल-व्याघ्राणां त्वहोरात्रमत्राभोजनमिति प्रकृत उप-वासः मार्जारान्तरगमने घृतं प्राश्य त्र्यहमुपवसेत् ।

आपस्तम्बः चाण्डालादिव्यवाये षण्मासमनध्ययनमाह ।

चण्डाल-श्वपाक-शवस्य च षण्मासान् अनध्याय इत्यनुवर्त्तते ।

हस्तिव्याघ्रयोरन्तरा गमने संवत्सरमनध्याय इत्याह स एव ।
यदि हस्ती संवत्सरो व्याघ्रस्तथैव च ।
याज्ञवल्क्यः ।
पश्चादिगमनेनाहोरात्रमनध्ययनमाह ।

पश्चु-मण्डूक-नकुल-श्वाहि मार्जार-मूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥

शक्रपातोच्छ्रयकालश्च पूर्व्वं दर्शितः ।
पुराणात् ।

मासि भाद्रपदे राजन् शक्रयष्टिप्रवर्त्तनं ।
उत्थापनं प्रसिद्धं यत् तदानध्याय उच्यते ॥

मनुः ।

पश्चु-मण्डूक-मार्जार-श्व-सर्प-नकुलाखुभिः ।
अन्तरा गमने विन्द्यादनध्यायमहर्निशं ॥

अन्ये त्वाहुः ।

काकोलूक-कुक्कुट-मूषक-मण्डूकाद्यन्तरागमने सति दिनद्वितयं दिनान्ते रात्रौ चेद्रात्र्यन्तमनध्यायः । शूद्र-मूषक-सर्प-नकुलादौ अहोरात्रं श्व-मार्जारयोश्च, प्रथमाध्ययने तु श्व-नकुल-सर्प-मण्डूक-मार्जाराणां त्र्यहमुपवासो विप्रवासश्च । आरण्यमार्जार-सर्प-नकुल-पश्चमजात्यादौ त्रिरात्रं । खर-वाराहोष्ट्रादिचण्डालादिसूतिकोद-क्योत्सवादौ मासं । अवि-गवयाजादिव्याघ्र-नास्तिकादौ त्रिमासं । गज-गण्ड-सारस-सिंह-व्याघ्र-महापापि-कृतघ्नावेचणमनध्यायः, स्वा-ध्यायस्य प्रवचने प्रवर्त्तमानेऽन्तरा गतौ आधि-व्याधि-मृत्यु-विघ्न-

पापानि गुरु-शिष्ययोः।

स्मृत्यन्तरे।

सर्व्वकुत्सितगन्धे च परिखाते सभासु च।
अभ्यक्ते स्नानकाले च महावेदेऽतिकम्पने॥
गो-विप्ररोधने सर्व्वराष्ट्रेषु श्राद्धपङ्क्तिषु।
शाल्मलस्य मधूकस्य कोविदार-कपित्थयोः।
श्लेष्मातकस्य च्छायायाञ्चेति तात्कालिकान्विदुः॥

याज्ञवल्क्यः।

श्व-क्रोष्टु-गर्द्दभोलूक-साम-वाणार्त्तनिस्वने।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके॥
देशे शुचावात्मनि च विद्युत्स्तनितसंप्लवे।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते॥
पांशुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु।
धावतः पूतिगन्धे च शिष्टे च गृहमागते॥
खरोष्ट्र-यान-हस्त्यश्व-नौ-वृक्षेरिणरोहणे।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः॥

श्वादीनां शब्दे श्रूयमाणे तावत्कालमनध्यायः, 'क्रोष्टा' गोमायुः, सामशब्दे तु ऋग्यजुषोरनध्यायः।

यदाह यमः।

सामशब्देनर्ग्-यजुषी मारुते वाति चायति।

मनुरपि।

सामध्वनौ ऋग्यजुषी नाधीयीत कदाचन।

अत्र हेतुमाह ।

ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः ।

सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥

अङ्गिराः ।

श्मशानिकानां देवानां सामवेदेन नित्यशः ।

क्रियते यजनं यस्मात् तस्मात् तस्याशुचिर्ध्वनिः ॥

अर्थवादमात्रमेतत् ।

तदाह स एव ।

यस्मात् ध्वनिरमूर्त्तोऽत्र मुख्यार्थो नैव विद्यते ।

तस्य तस्मान्निदानमात्रं प्रोक्तमिदमर्थवादेन निदानं प्रतिषेध-निमित्तमात्रं ।

एवमृगादिनिस्वने साम्नामनध्यायः ।

तथाचापस्तम्बः ।

शाखान्तरध्वनौ च साम्नामनध्यायः ।

'वाणः' वीणाविशेषः । 'आर्त्तः' दुःखितः ।

मनुरपि ।

नीहारे वाणशब्दे च सन्ध्ययोरुभयोरपि ।

'नीहारे' धूमिकायां ।

गौतमः ।

वाण-भेरी-मृदङ्ग-गर्दार्त्तशब्देषु ।

'गर्दः' शकटं ।

अनध्यायानुवृत्तौ बौधायनः ।

नृत्य-गीत-वादित्र-रुदितशब्देषु तावन्तं कालमार्त्तं च ।

गोभिलः ।

गीत-वादित्ररुदितानि वा तेषु तत्तत्कालं ।

आपस्तम्बः ।

श्व-गर्द्दभनादाः शालावृक-दन्ति-काकोलूकशब्दाः पृथुवादित्र-शब्दा रोदन-गीतसामशब्दाश्च एतेषु तत्कालमनध्यायः ।
श्वादीनां 'अन्तिके' समीपे, 'अन्त्याः' शूद्रनिकृष्टाः ।

विष्णुरपि ।

न शूद्र-पतितयोः समीपे न देवायतने श्मशाने चतुष्पथे शुचो-दकान्ते पीठोपहतपादोनाचान्तो न विरक्तोनाजीर्णः ।

प्रचेताः ।

चतुष्पथ-महापथसंक्रमोद्यानेषु न देवसमीपेऽधीयीत ।

मनुः ।

नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि च ।
वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥

'अन्तः' समीपं, 'मैथुनं वासः' येन सह मैथुनमाचरितं तद्वासः परिधायेत्यर्थः, एतदनिर्णिक्तवासोविषयं ।

अतएव यमः ।

वासस्यपि ह्यनिर्णिक्ते मैथुनाचरिते सदा ।

वसिष्ठः ।

मैथुनव्यपेतायां शय्यायां वाससा मैथुनव्यपेतेनानिर्णिक्तेन ग्रामा-न्तरे छर्दितस्य छर्दिते त्वहोरात्रमनध्यायः ।

गौतमः ।

सकुलोपाहित-वेदसमाप्ति-च्छर्दि-श्राद्ध-मनुष्ययज्ञ-भोजनेष्वहो रात्रं। अम्युत्पातः 'उपाहितः', 'मनुष्ययज्ञः' यात्रादिनिमित्तं ग्राम-भोजनं। मनुष्यप्रसृतीनाञ्च भुक्तौ चाहोरात्रं स्वप्नान्तमित्येके ।

हतं प्राश्य वाधीयीतेत्याहापस्तम्बः ।

छर्दयित्वा स्वप्नान्ते सर्पिर्वा प्राश्य ।

'स्वप्नान्तं' श्रोदयादित्यर्थः ।

मनुः ।

नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च।
धर्मनैपुण्यकामानां पूतिगन्धेषु सर्वतः॥

ये गृहीतविद्यास्ते धर्मनैपुण्यकामाः, इतरे विद्यानैपुण्यकामाः तेषां ग्रामेऽप्यध्ययनं विरुद्धं ।

अतएव वसिष्ठः ।

नगरे तु कामं गोमयपर्युषिते परिलिखिते वेति ।

अतएव मनुराह ।

अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायोरुद्यमाने समवाये जनस्य च ॥

'वृषलः' अत्राधार्मिकः "न शूद्रजनसन्निधाविति शूद्रसन्निधा-नेऽध्ययनस्य तेनैव निषिद्धत्वात् ।

वसिष्ठोऽपि ।

सन्ध्यास्वाशौचे दिवाकीर्त्त्यन्त इति ।

'दिवाकीर्त्त्यन्ते' चाण्डालग्रामे नाधीयीतेत्यर्थः ।

गौतमः।

नित्यमेके नगरे।

प्रचेताः।

चतुष्पथ-महापथेषु राजोद्यानेषु न देवसमीपेऽधीयीत।

गौतमः।

श्मशान-ग्राम-महापथाशौचेष्विति।

श्मशाने तु विशेषमाहापस्तम्बः।

श्मशाने सर्वतः शम्याप्रासाद्ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायोऽज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत। श्मशानवत् शूद्रपतितौ समानागार इत्येके। शूद्रायान्तु प्रेक्षण-प्रतिप्रेक्षणयोरेवानध्यायः। तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने विद्युत्स्तम्वस्तनितसंप्लवे।

न वृक्षस्थो न तीर्थस्थो नाप्सु नौषु सभासु च।
बहुसंकीर्णमध्ये च नाधीयीत कदाचन॥

शङ्खः।

नाधीयीताभियुक्तोऽपि यानगो न च गोगतः।
देवायतन-वल्मीक-श्मशान-वनसन्निधौ॥

मनुः।

नाधीयीताश्वमारूढ़ो न वृक्षं न च हस्तिनं।
न नावं न खरं नोष्ट्रं नेरिणस्थोन यानगः॥
शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकां।
नाधीयीतामिषञ्जग्ध्वा सूतकान्नाद्यमेव च॥

न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

'ईरिणं' ऊषरं। 'प्रौढ़पादः' अवसक्थिका-जान्वोर्मध्यस्य च वस्त्रादिना वेष्टनं। 'भुक्तमात्रे' यावदार्द्रपाणिरित्यर्थः ।

उदके तु न धर्मार्थं जपनिषेधः किं तर्हि अपूर्वग्रहणार्थं, एते त्वादरार्थाः, नान्येष्वनध्यायेषु मानसाभ्यनुज्ञेति केचित् । अपरे तु मानसमन्विच्छन्ति ।

तथाच बौधायनः ।

अन्येषु चाद्भुतोत्पातेष्वनध्यायोऽन्यत्र मानसात् ।

'मानसः' विजन-मरणयोरनध्यायः ।

मनुः ।

उदके मध्यरात्रौ च विण्मूत्रे परिवर्जयेत् ।
उच्छिष्टः श्राद्धभुक्तौ च मनसापि न चिन्तयेत् ॥

गौतमः ।

ऊर्द्धं भोजनादुत्सवे प्राधीतस्य च उत्सवे उपनयनादूर्ध्वं भोजनादहोरात्रमनध्यायः ।

'प्राधीतस्य' अध्ययने प्रथमं प्रवृत्तस्य, भोजनादूर्द्धमनुत्सवेऽपि पूर्ववदनध्यायः ।

स्मृत्यन्तरे ।

शोभनगृहे शोभनदिवसे वानध्यायः विवाह-मौञ्जीबन्धन-प्रतिष्ठोद्यापनादिषु मार्जनसंमार्ष्टिः सपिण्ड-सगोत्राणामनध्यायः । यज्ञे चानुबन्ध्यात् ऋत्विजामाचार्याणाञ्च ।

मनुः ।

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा ।
श्व-खरोष्ट्रे च रुवति पङ्क्तौ च न पठेत् द्विजः ॥

यमः ।

शिवारुतं तथा श्रुत्वा सन्ध्ययोर्न्न द्विजोत्तमः ।
नापराह्णे न मध्याह्ने नार्द्धरात्रे कदाचन ॥

शिष्टे च गृहमागते तदनुज्ञावधिरनध्यायः ।

तथाच यमः ।

आगतञ्चातिथिं दृष्ट्वा नाधीयीतेव बुद्धिमान् ।
अभ्यनुज्ञापिते तस्मिन्नध्येयं तु प्रयत्नतः ॥

मनुः ।

अतिथिञ्चाननुज्ञाप्य मारुते वाति वायति ।
रुधिरे च श्रुते गात्रात् शस्त्रेण च परिक्षते ॥

ब्राह्मणागमनेऽर्घ्यादीनि दत्त्वाभ्यनुज्ञाप्याधीयीरन् ।

आपस्तम्बः ।

ब्रह्म घोषमाणो मलवदासमेच्छन् सम्भाषितुं संयतोऽध्येतुर्ब्रा-ह्मणान् सम्भाष्यतया सम्भाषेत सम्भाषित्वा ब्राह्मणे नैव सम्भा-ष्याधीयीत, तथा श्रोत्रियाध्यागमेऽधिजिगांसमानोऽधीयानोवानु-ज्ञाप्याधीयीताध्यापयेद्वा गुरुसन्निधौ वाधीहि भो इत्युक्तोऽधीयी-ताध्यापयेद्दोभयतः उपसंग्रहणमधिजिगांसमानस्याधीत्य वाधीया-नेषु वा यत्रान्योव्यपेयादेतमेव शब्दमुत्सृज्याधीयीत ।

तथानृतावभ्रदर्शनेऽप्यनध्यायमाह ।

गौतमः।

अभ्रदर्शने चापर्त्ताविति।

'अभ्रं' जलधरोमेघः।

यमः।

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च।

कदाचिदपि नाध्येयं कोविदार-कपित्थयोः॥

यत्तु मनुनोक्तं।

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः।

स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः॥ इति।

तद्ब्रह्मयज्ञाध्ययनविषयं।

तथाच ब्रह्मयज्ञं प्रकृत्य तैत्तरीयकाः समामनन्ति।

तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश-इति।

अतएव मनुरपि।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।

नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि॥

'वेदोपकरणानि' अङ्गानि, 'नित्यस्वाध्यायः' ब्रह्मयज्ञसम्बन्धी, होममन्त्रग्रहणं बलियज्ञादिमन्त्राणामप्युपलक्षणं।

नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रन्तु तत् स्मृतं।

ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतं।

अपूर्वग्रहणार्थं वानध्यायो न तु कर्मणि॥

प्रयोगशौनकोऽपि।

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोभवेदेवं ग्रहणे चाह यो स्मृतः[१] ॥ इति ।

पुराणात् ।

शिष्योऽध्ययनञ्च कुर्वन्ननध्यायान् विवर्जयेत् ।
अध्यापनञ्चापि कुर्वन् अनध्यायान् विवर्जयेत् ॥

मनुः ।

इमान्नित्यमनध्यायानधीयानो विवर्जयेत् ।
अध्यापनञ्च कुर्वाणः शिष्याणां विधिपूर्वकं ॥

तथा ।

प्रणवव्याहृतीनाञ्च सावित्र्याः शिरसः सदा ।
नित्ये नैमित्तिके कार्य्ये व्रते यज्ञे क्रतौ तथा ॥
प्रकृते कामकार्य्ये च नानध्यायाः स्मृतास्तथा ।
देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥

तथा ।

चतुर्दश्यष्टमी-पर्व-प्रतिपत्स्वेव सर्व्वदा ।
दुर्मेधसामनध्यायस्त्वन्तरा गमनेषु च ।
न च विस्मृतिशीलानां बहुवेदप्रपाठिनां ॥
चतुर्दश्यष्टमी-पर्व-प्रतिपद्वर्जितेषु च ।
वेदाङ्ग-न्याय-मीमांसा-धर्मशास्त्राणि चाभ्यसेत् ॥

गौतमः ।

प्रतिविद्यं यावत्समामनन्ति तथा चतुष्पथे भोजनोत्तरकालं

---

(१) "ग्रहणे चाह यो स्मृतः" इत्ययं पाठः न समीचीनो विभाति ।

छन्दोगानामनध्यायः, तथाच प्राग्भोजनीयात् प्रादादधीयारण्य-गेयानि ।

आपस्तम्बः ।

यथोक्तमन्यदत्तपरिषत्स्वपि ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसक-लविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये अनध्यायकालनिर्णयः ।

---

## अथ केशान्तकर्मकालः।

तत्र याज्ञवल्क्यः।

केशान्तश्चैव षोड़शे।

'केशान्तः' गोदानाख्यं कर्म, एतच्च ब्राह्मणविषयं।

यदाह मनुः।

केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य ह्यधिके ततः॥

ज्योतिःशास्त्रे।

यान्युक्तानि चौरेषु भानि तान्येव चूड़ाकरणे।
उपनयने गोदाने केशान्ते च शस्तानि॥

इति केशान्तकर्मकालः।

---

## अथ ब्रह्मचर्य्यकालविधिः।

तत्रापस्तम्बः।

उपेतस्याचार्य्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि पादोनमर्द्धेन त्रिभिर्वा द्वादशावरार्द्धं न ब्रह्मचारिणोवरोपवासोऽस्ति। त्रिभिः पादैरूनं द्वादशवर्षाणीत्यर्थः, एतच्चाशक्तविषयं।

यदाह देवलः।

अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदव्रतचर्य्यामातिष्ठेत अशक्तश्चेत् षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं चेति।

एतत्प्रतिवेदविषयं।

यदाह यमः।

वसेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥

बौधायनोऽपि ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यमाचरेत्, चतुर्विंशति द्वादश वा प्रतिवेदं संवत्सरार्द्धं वा प्रतिग्रहणाद्वा जीवितस्यास्थिरत्वात् कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ।

पैठीनसिः ।

द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्यञ्चरेत् प्रतिद्वादशं वा सर्वेषु ग्रहणान्तं वा ।

शङ्ख-लिखितौ ।

द्वादश द्वादशवर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावत् ब्रह्मचर्यमाचरेत् ।

मनुः ।

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैविद्यकं व्रतं ।
तदर्द्धं पादिकं वापि ग्रहणान्तिकमेव वा ॥

अस्यार्थः ।

त्रैविद्या ऋग्यजुःसामाख्यवेदत्रयविषयं, तत् षट्त्रिंशदाब्दिकं कार्य्यमेव प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्यमित्युक्तं भवति, अर्द्धिकपक्षे प्रतिवेदं षड्वर्षाणि, पादिकपक्षे तु त्रीण्येव ।

याज्ञवल्क्यः ।

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।

ग्रहणान्तिकमित्येके ।

इति ब्रह्मचर्यकालनिर्णयः ।

## अथ समावर्त्तनकालः ।

तत्र दक्षः ।

स्वीकरोति यदा वेदं धत्ते वेदव्रतानि च ।
ब्रह्मचारी भवेत्स्नातस्ततः पश्चाद्गृही भवेत् ॥

वेदस्वीकरणं वेदार्थविचारस्याप्युपलक्षणं ।

तथाच स्मृत्यन्तरे ।

वेदमधीत्य च्छन्दोविषयानर्थान् बुद्ध्वा स्नायात् ।

तथाच व्यासः ।

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुं ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारवाही न तस्य लभते फलं ।
द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते ॥
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥
योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः पशुसमः[१] पात्रतां न प्रपद्यते ॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।
स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानसिद्धितः ।
श्रुतहीनधनः सोऽपि यन्नेहामुत्र तद्भवेत् ॥

तथा ।

ज्ञानं कर्म्म च संयुक्तं श्रद्धया कल्पितं यथा ।

---

(१) खरसमः इति ख० ।

अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलं ॥
पाठमाचरताचित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
ऋक्पादमप्यधीत्यान्तर्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

एतत्समर्थविषयं एकैकसमाप्तावपि स्नानविधानात् ।

तच हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्या-व्रतस्नातकश्चेति ।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः, यस्तु समाप्य व्रतानि असमाप्य वेदं स व्रतस्नातकः, यः पुनरुभयं समाप्य स विद्या-व्रतस्नातकः ।

याज्ञवल्क्यः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

आपस्तम्बेद्ययास्नायीत्येके[१] तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्याव्रतेन चेत्येके, आधानाद्युपरिष्टालाच्छ त्रिषवणमुदकमुपस्पृशन्ननग्निपक्कवृत्तिरस्नायोगस्थानासनिकः संवत्सरमेतद्व्रतञ्चरेत् एतदष्टचत्वारिंशत्सम्मितमित्याचक्षते ।

व्यासः ।

गुरुशुश्रूषया विद्यां सम्प्राप्य विधिवत् द्विजः ।

---

(१) पाठोऽयं न समीचीनो विभाति ।

स्नायीत तदनुज्ञातो दत्त्वास्मै दक्षिणां हि गां ॥

गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञातस्य स्नानमिति ।

विद्यान्ते गुरुरर्थेन हेतुना 'निमन्त्र्यः' प्रष्टव्यः, कोऽर्थस्तुभ्यन्दातव्यः इति पृष्टः स खलु यं ब्रूयात्तमर्थमाचार्याय दत्त्वा स्नायादशक्तौ तदनुज्ञया वेत्यर्थः ।

बुधोऽपि ।

गुरुणानुज्ञातः स्नायादिति ।

इति समावर्त्तनकालः ।

---

## अथाश्रमकालनिर्णयः ।

तत्र ।

चतुर्णामाश्रमाणां समुच्चयो विकल्पश्च तत्र समुच्चयं प्रकृत्य मनुराह ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्व्वेऽपि क्रमशश्चैते यथाशास्त्रनिषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिं ॥

'गृहस्थप्रभवाः' तदुपजीविनः। 'क्रमश इति प्रातिलोम्यं निषिद्धं ।

तथाच दक्षः ।

त्रयाणामानुलोम्यन्तु प्रातिलोम्यन्न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।

न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥

तेन मृतभार्येण पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यं, तत्र च ब्रह्मचारि-गृहाश्रमशब्दावुत्तरोत्तराश्रमिणः पूर्वपूर्वाश्रमानाश्रयणप्रतिपादनपरौ, अन्यथा "प्रातिलोम्यं न विद्यते" इति ग्रहणमविवक्षितं स्यात् ।

कूर्मपुराणे ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥
वानप्रस्थाश्रमङ्गत्वा न गृहं प्रविशेत्पुनः ।
न सन्यासी वने वासं ब्रह्मचर्यञ्च साधकः ॥

पुराणात् ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
अप्रमत्तो द्विजातेन मार्गाः पुत्र कुवर्त्मना ॥*

आपस्तम्बः।

चत्वार आश्रमा गार्हस्थमाचार्य्यकुलवासः संन्यासोवानप्रस्थमिति। तेषु सर्व्वेषु यथोपदेशमव्यग्रोवर्त्तमान आश्रमं गच्छति, तेषु सर्व्वेषु वर्त्तमान इति समुच्चयोदर्शितः ।

जावालश्रुतिश्च चतुर्णां त्रयाणां द्वयोर्वा समुच्चय इत्याह ।

ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति ।

समुच्चये कालविशेषाकाङ्क्षायामाह मनुः ।

चतुर्थमायुषोभागमुषित्वा खगुरोर्द्विजः ।

द्वितीयमायुषोभागं कृतदारोवसेद्गृहे ॥
वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषोभागं त्यक्ता सङ्गान् परिव्रजेत् ॥

"शतायुर्वै पुरुष इति श्रुत्याभिहितमायुषश्चतुर्थोभागः पञ्चविंशतिवर्षाणि ।

गौतमस्तु विकल्पमाह ।

तस्याश्रमविकल्पमेके ब्रुवते ।

अयन्तु विकल्पोव्रतचर्य्याश्रमव्यतिरिक्तविषयः ।

वसिष्ठः ।

चत्वार आश्रमा ब्रह्मचारी गृहस्थोवानप्रस्थः परिव्राजकस्तेषां वेदमधीत्य वेदौ वेदान् वा विशीर्णब्रह्मचर्य्यमिच्छेत्तमाविशेत् ।

वेदान् वेदौ वेति पचौ फलभूयस्त्वमभिप्रेत्य, वेदमधीत्याविप्लुतब्रह्मचर्य्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तं 'आविशेत्' आश्रयेत्तत्रैव निष्ठां यायादित्यर्थः ।

वामनपुराणे ।

गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम् ।
ब्रह्मचर्य्येण वा कालं नयेत्सङ्कल्पपूर्व्वकम् ॥
वैखानसोवाथ भवेत्परिव्राड्थ वेच्छया ।
गुरवे तु वरं दत्त्वा स्नायाद्गुर्व्वनुमोदितः ।
गृहं वनं वोपवसेद्व्रजेद्वापि द्विजोत्तमः ॥

उशनाः ।

आचार्य्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं ।

आ विमोकाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥

अयञ्च विकल्पः समुच्चयानुष्ठानरहितानां वेदितव्यः ।

इत्याश्रमकालनिर्णयः ।

---

## अथोद्वाहविकल्पः ।

तत्र वृहस्पतिः ।

वेदानधीत्य विधिना समावृत्तोऽप्लुतव्रतः ।
समानामुद्वहेत्पत्नीं यशः-शील-वयो-गुणैः ॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाविशेत् ॥
गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणां ।
सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥
वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।
अविशीर्णब्रह्मचर्य्यो दारान् कुर्वीत धर्मतः ॥

अत्र नैष्ठिकानन्तरं शङ्ख-लिखितौ ।

अथानुज्ञातो गुरुणाद्युपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादि-नोद्वाहेन ।

दक्षः ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्द्ध्वं स्नातोगृही भवेत् ॥
अनधीत्य द्विजोवेदान् स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्य्येण साङ्गं वेदं गुरोर्गृहे ॥

युग्मेऽब्दे सम्पदा विद्या-धर्म-कामायुषां सदा।
भर्त्तुरिष्टाभवत्योजे वर्षे कन्या त्वसंशयम्॥
माघमासे भवेदूढ़ा कन्या सौभाग्यसंयुता।
फाल्गुनोढ़ा भवेत्साध्वी वैशाखे पुत्त्रिणी भवेत्॥
धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्त्तिके भवेत्।
देवपूजारता नित्यं मासे स्यात् सोमदेवते॥
उक्तवर्ज्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि।
विवाहं कन्यका सा स्यात् सुत-शीलार्थवर्जिता॥
सितपक्षे तु यशसा प्रकाशयति सा कुलम्।
कन्योढ़ा त्वसिताद्ये च अशेषे चेन्निदर्शना[१]॥

तथा।

शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणं।

वसिष्ठः।

आपूर्य्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु।
इतरेषां तु वर्णानां कृष्णपक्षे विधीयते॥

व्यासः।

उपासनोयरिक्तासु तिथिषु स्यादमङ्गिता।
दुर्भगा चेति शेषासु सुत-सौभाग्यसंयुता॥

तथा।

कल्याणभाविता प्रीतिः सौभाग्यं धनसञ्चयः।

---

(१) पाठोऽयं स्वादर्शसम्मतोमुद्रितः परमत्वयं न समीचीनः।

सुखार्थौ बहुविघ्नानि शील-सौख्यप्रकीर्त्तयः ॥
शोकामयौ सुदः सौख्यं भाग्यमेवात्मजादयः ।
उपद्रवाः पूर्णफलं शुक्ले प्रतिपदादयः ॥

तथा ।

गुरु-शुक्रेन्दुपुत्त्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तुश्चित्तानुसारिणी ॥
अर्क-तत्पुत्त्र-भौमानां दिनेषु कलहप्रिया ।
चापल्यं समवाप्नोति तुषारकरवासरे ॥
अष्टवर्गगतोऽनिष्टस्थानप्राप्तशुभग्रहः ।
यदा तदा तद्दिवसे विवाहो न प्रशस्यते ॥
यद्यस्य दिवसे प्रोक्तं ग्रहस्य सदसत्फलं ।
तदशेषं तदीयायां होरायामपि निर्द्दिशेत् ॥
प्रशस्तं जन्मतारासु केचिदाहुस्तथापरे ।
दिनारं जन्मनक्षत्रे त्यक्त्वा चान्यां[1] फलप्रदं ॥
अर्कादीनां दिने युक्तं यत्फलं तदिलग्नगे ।
तद्वर्गेऽपि भवेत्कालं होरायान्तु विशेषतः ॥
आदित्याद्यन्यवारेण ऋतोरर्कायनस्य च ।
सग्रहोऽधिपतिस्तस्य वदन्तीति महर्षयः ॥
दिवसे फलमेतेषां ग्रहणे यद्विहोदितं ।
तन्मासर्त्वयनाब्देषु सदेवाविकलं भवेत् ॥

---

(१) त्यक्त्वा चान्यां इत्ययं पाठो न समीचीनः ।

तिर्य्यक्पञ्चोर्ध्वगाः पञ्च रेखे द्वे द्वे च कोणगे।
शङ्कुरेखादिभिर्न्यस्य भानि तत्र प्रदक्षिणं॥
कृत्तिकादीनि यत्तस्मिन्नेकराशिस्थितं ग्रहं।
नक्षत्रममुना विद्धं विवाहे स्यादशोभनं॥

तथा।

मैत्रं पित्र्यं तथा वैश्यं ब्रह्म-नैर्ऋतदैवतं।
अहिर्बुध्नार्यमा वापि पौष्ण-धातृ-निशाकराः॥

तथा।

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च।
षड्भागशेषेष्वन्येषु नक्षत्रेषु न शस्यते।
रेवत्यर्द्धचतुर्भागे विवाहः प्राणनाशनः।
स्वान्त्यजेषु त्रिषु सदा पाणिग्रहणमिष्यते॥

तथा।

हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती।
रोहिणी सौम्य-मैत्रञ्च शुभं पाणिग्रहे सदा॥
त्यजेद्विषुवतं यत्नाद्व्यतीपातायनं तथा।
उत्पातदूषितञ्चर्क्षं वैधृतिञ्च विशेषतः॥

वात्स्यः।

सावित्र्यानिलसंयुक्तान् मुहूर्त्तानपि निर्द्दिशेत्।
समानदैवतैस्तुल्यं नक्षत्रैः फलमादिशेत्॥
मुहूर्त्तेष्वभिजिद्वर्ज्जं शुद्धाहे कालचिन्तकः।
अष्टमो दिवसस्यैव योऽभिजित्संज्ञितः क्षणः॥

स ब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः ।
उपग्रहोदयाद्येश्च पापैस्तैर्न हि बध्यते ॥

तथा ।

वैवाहिकर्क्षदैवत्यमुहूर्त्तेष्वपि जायते ।
पाणिग्रहः कुमारीणामभीष्टार्थफलप्रदः ॥

वैधव्यन्दिनबान्धवस्य जगतीसूनोरपत्यक्षयः
सौभाग्यार्थपरिच्युतिः सुरगुरोर्दास्यं तथा दुःखिता
प्राबल्यं भृगुनन्दिनः सुतिरपि त्यागश्च सौरेः पुन-
र्नारीणां गणिकात्वमेव तमसः केतोश्च वैधाद्वधः ॥

सारावल्यां ।

सर्वेऽप्यनुकूलाः शशि-सूर्यौ नैव गोचरविशुद्धौ ।
अप्यूढ़ा शक्रधूर्य्यमस्य धनदस्य वा कुलटा ॥

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।
वर्जयेत्सर्वकर्माणि व्रत-स्वस्त्ययनानि वा ॥

गुरौ न जन्माष्टमगे विवाहः
शनैश्चरे जन्मगते तथैव ।
न चाष्टमे शीतकरे च कुर्याद्-
रवौ वरान्नैधनगे प्रयत्नात् ॥

ग्रहणत्रयमध्यस्थं ग्रहणादौ सप्तरात्रमपि हन्तं ।
यात्रा-विवाहसमयं मनसापि न चिन्तयेत् प्राज्ञः ॥

व्रतबन्धं द्विजातीनां उद्वाहं सुन्दरीषु च ।
गुरावस्तमिते नित्यं न कुर्याद्भार्गवे तथा ॥

विवाहमपि नेच्छन्ति मुनयः काश्यपादयः।
यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः।
तथा सिंहगते जीवे विवाहे बादरायणः॥

वसिष्ठः।

विवाहे व्रतबन्धे च यात्रायां व्रतकर्मणि।
गुरावस्तमिते शुक्रे जातस्य परिणीयते॥
गुरुर्नष्टः पतिं हन्याच्छुक्रोनष्टस्तु कन्यकां।
चन्द्रे नष्ट उभौ हन्ति विवाहे तौ विवर्जयेत्॥
पश्चादभ्युदितोबालो दशाहं प्राग्दिनत्रयं।
पक्षं वृद्धस्तु पूर्व्वेण पश्चाहं पश्चिमे सितः॥
विचित्तमुपयाति नाशमबल-प्रतापौ दक्षिणे लयने।

वराहः।

देशाचारस्तावदादौ विचिन्त्यो-
देशे देशे या स्थितिः सैव कार्या।
लोके दुष्टं पण्डिता वर्जयन्ति
दैवज्ञोऽतोलोकमार्गेण यायात्॥
बृहस्पतौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः।
रवौ शुभस्थे च वदन्ति गौड़ः
न गोचरोमालवके प्रमाणं॥

गौडाः सूर्यबलं प्राहुर्दाक्षिणात्या गुरोर्बलं।
मालवा लग्नमिच्छन्ति लाटानां स्थानजम्बलं॥

तारावलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः ।
तथोत्तरा मौकुलसन्निकृष्टाः
माण्डव्य-तित्तीर-तुषारकेषु ॥
ग्रहर्क्ष-योगास्तिथि-वार-योगाः
शुभाशुभा ये कथिताः प्रभूताः ।
वङ्गेषु तत्प्रोक्तफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः ॥

सारावल्यां ।

षष्ठोविलग्नादृविरष्टमो वा
भागो मुहूर्त्तो यदि युज्यते च ।
सूर्य्येन्दु-तारावलसम्प्रयुक्ता
गोधूलिका सर्वफलप्रदायी ॥

लग्नशुद्धिर्यदा न स्याद्यौवनन्तु प्रशस्यते ।
तदा तु सर्ववर्णानां कालोगोधूलिकः स्मृतः ॥
राशिर्न ज्ञायते यस्य नापि लग्नस्य निश्चयः ।
लग्ने सूर्य्यावली यस्मिन् तत्र सर्वं प्रशस्यते ॥
सौरस्त्वेकवलोज्ञेयो माहेयोद्विवलः स्मृतः ।
त्रिवलस्तु बुधोज्ञेयश्चतुर्गुणबलोगुरुः ॥
शुक्रः पञ्चवलोज्ञेयश्चन्द्रः षड्वल उच्यते ।
सर्वग्रहवलैर्नित्यं तुल्य एवं दिवाकरः ॥
यात्रा विवाहकालेषु कार्य्येषु विविधेषु च ।

यत्र सूर्यबलं नास्ति नास्ति सर्वं ततोबलं ॥
पुंसामर्कः स्मृतो योनिर्योषितामस्तद्युतिः ।
अतोनृ-योषितोराप्तं बलं चन्द्र-शशाङ्कजं ॥
यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ ।
दोषास्तत्र प्रलीयन्ते यदि स्युः सर्वतोऽपगाः ॥
नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥
द्वादश-दशम-चतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥
सिंहे च भगदैवत्ये गुरौ पुत्त्रवती भवेत् ।
अत्यन्तसुभगा साध्वी धन-धान्य-पतिप्रिया ॥

वात्स्यायनः ।

पक्ष-तिथि-क्षण-करण-लग्नेन्द्वर्कौ लग्न-ताराभ्यः ।
पाणिग्रहणे योज्यास्तत्त्वविदैकादशपदार्थाः ॥
विवाहकर्म नेच्छन्ति प्रसुप्ते शार्ङ्गधन्वनि ।
एतावत्र गतानान्तु माण्डव्याद्या महर्षयः ॥

सिंहस्थिते सुरगुरावधिमासके च
ज्येष्ठे तथाद्यतनुजस्य तथा सुतायाः ।
कुर्वीत नार्क-गुरुनीचगयोर्विलग्न-
जन्मस्थयोश्च निखिलान्यपि मङ्गलानि ॥

रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात् ।
भौमेन म्रियते चौरैः शुक्रे पापं समाचरेत् ॥

रहस्यनिपुणा सौम्ये व्यक्तलज्जा रतिप्रिया ।
पतिमन्यं व्रजेत् क्षिप्रं केतुसन्दर्शनाश्रिते ॥
गुरुश्चन्द्रश्च जामित्रे तिष्ठेद्यदि बलान्वितः ।
धन-सौभाग्य-पुत्रांश्च लभते नात्र संशयः ॥
मणि-मुक्ता-प्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुमता शिष्टा गुरुणा यदि वीक्ष्यते ॥
सा तु भर्त्तुः प्रिया नित्यं बुधे चन्द्रेऽथ सप्तमे ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
दृष्टे चन्द्रे च भौमे च न कुर्य्याद् यामिशासनं[1] ।
वन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥

वसिष्ठः ।

मरणं माहमन्तीव्रं दास्यं दौःशील्यमेव च ।
चन्द्रयोगे ग्रहाः कुर्य्यूरवि-रक्तार्कि-भार्गवाः ॥
नैपुण्यं कुलपूज्यत्वं पौंश्चल्यं व्याधिमेव च ।
बुध-जीवयुताः कुर्युः कर्त्तुश्चैव यथाक्रमात् ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा दारुणैः सहितः पुनः ।
दारिद्र्यं मरणं वापि कन्यायाः कुरुते ध्रुवं ॥
व्रजत्यन्यजने नारी गैरिकाम्बरभूषिता ।
विदेशं वा व्रजेद्यत्र सौम्यैश्चैव युतः शशी ॥
लग्नानां मिथुनः श्रेष्ठस्ततः कन्या ततस्तुला ।
तथा शेषविलग्नास्तु विवाहे अफलाः स्मृताः ॥

---

(१) न कुर्य्यादामिषाशनमिति क० ।

अन्ये द्विचतुरादीनामंशा ग्राह्या मनीषिभिः।
युग्म-कन्या-तुलायान्तु न खांशो न परांशकः॥
सुहृदः सौम्यषड्वर्गाः लग्नसौम्यनिरीक्षितः।
यो वा विवाहकालेषु प्रवेशे शुभकर्मणि॥
ब्राह्मणं कुरुते जारं शुक्र-जीवसमागमे।
जीव-भास्करयोः स्यातं व्रतस्थं कुरुते पतिं॥
देवेश-सौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा।
करोति तस्करं जारं कन्या नैवात्र संशयः॥
विलग्नांशः स्वनाशेन यद्युदाहे न दृश्यते।
पुंविनाशस्ततोऽत्रांशे यद्येवं योषितस्ततः॥
दशम-तृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रञ्च।
पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति॥

व्यासः।

मेषाद्या ये मया पूर्व्वमुक्ता द्वादश राशयः।
तेषां कन्या तुला चैव मिथुनञ्च प्रहृष्यते॥
कन्या-तुलासु मेषेषु लग्नेष्वन्यांशके न तु।
अतोंऽशके फलं कृत्स्नं वदतो मे निशामय॥
तेषां सकोटकन्यान्यकुमारगतमानसा।
वृता वृषभगे साध्वी युग्मांशे शीलसंयुता॥
वेश्या कुलीरभागे स्यात् तीव्रशेषा तथैव च।
सत्तमशस्ता सिंहांशे पितृवेश्मरता तथा॥
रूप-शील-गुणोपेता कन्यांशे स्यात् कुमारिका।

रूपान्विता तुलस्थांशे दुःशीला मलदूषिता ॥
वेश्या कुलसुखीत्यन्ते वृश्चिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृग-कुम्भ-झषांशके ।
सुवृद्धा ह्यन्यसक्ता स्यात् कन्या नास्त्यत्र संशयः ॥

गर्गः ।

अधिमासकृतान्दोषानृतुपर्य्यायनोद्भवान् ।
मुहूर्त्त-करणोपेतांस्तिथ्युत्पातभवांश्च यान् ॥
ग्रहदृष्टिं दुराधर्षां द्रेक्काणांशकराशिजान् ।
गुरु-शुक्रबुधाघ्नन्ति लग्ने सम्यग्व्यवस्थिताः ॥

आचार्य्यः ।

लग्नराशियुक्तो जामित्रगतश्च वर्जितोराहुः ।
लग्नस्थे वैधव्यं जामित्रगते च कन्यकामरणम् ॥
राशियुक्ते प्रव्रज्याख्या न चितये सदा वर्ज्ये ।
शाम्यग्गे मृत्युः स्याद्धनहानिर्द्वितीयगे ॥
दुश्चिक्येऽर्थविवृद्धिः स्याद्बन्धुनाशश्चतुर्थगे ।
सुतनाशः सुतस्थे स्याद्धर्नवृद्धिस्तथाङ्गिरे ॥
जामित्रस्थे च वैधव्यं आयुर्वृद्धिस्तथाष्टमे ।
धर्मगे धनहानिः स्यात् कर्मगेऽर्के विशीलता ॥
लाभः स्यादायगे भानौ व्ययोद्वादशगे भवेत् ।
चन्द्रे व्ययप्रिया लग्ने द्वितीये धनिनी भवेत् ॥
तृतीये सुभगा साध्वी बन्धौ बन्धुप्रिया भवेत् ।
सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ॥

जायास्थे सप्तपत्नी स्यान्मृत्योर्मृत्युमवाप्नुयात् ।
कन्या प्रजावती धर्मे विकारस्थारकर्मणि ॥
भर्त्तृप्रियोपयुक्ता च शशिन्येकादशस्थिते ।
वर्णाणी द्वादशे च स्यात् कन्यका शीतदा शनौ ॥
अनिष्टग्रहणं यातौ प्रशस्तफलदः शशी ।
सौम्यांशकस्थो मैत्रेण दृश्यते चेद्वलीयसा ॥
वैधव्यं लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ।
अग्नि-चौरभयार्त्ता स्यात् द्वितीयस्थे धरासुते ॥
तृतीयस्थेऽर्थसम्पन्ना बन्धुदुष्टा चतुर्थगे ।
पुत्रहीना सुतस्थे स्यादरिगे सुतभागिनी ॥
सप्तमस्थे महीपुत्रे पुंश्चली खलसंयुता ।
अष्टकस्थावं धरासूनौ पुत्रस्थे कन्यकाप्नुयात् ॥
नवमे भर्तृविद्दिष्टा दशके कुहकप्रिया ।
धनान्विता तथायस्थे नष्टार्था व्ययगे भवेत् ॥
लग्नस्थे चन्द्रपुत्रे स्याद्धर्मज्ञा सुप्रजा स्थिरा[१] ।
स्वकुटुम्बरता नित्यं धनस्थे सोमनन्दने ॥
श्वश्रू-श्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ।
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ॥
बहुपुत्रा सुतस्थे स्याद्धतशत्रुस्तथाङ्गिरे ।
कष्टामापदमाप्नोति पुत्रहानिं तथैव च ॥
सप्तमस्थेऽष्टमस्थे च रोगार्त्ता दुःखभागिनी ।

(१) स्थितेति ख० ।

तपोरता धर्म्मगे स्यान्मायाशीला च कर्म्मणा ॥
सुत-भृत्य-धवोपेता भौमे द्वादशगे भवेत् ।
कन्या सद्व्ययसंयुक्ता शशाङ्कतनये सदा ॥
गुरौ लग्नगते कन्या धर्म्मशीला बहुप्रजा ।
सुदीर्घमायुराप्नोति निधनं निधने भवेत् ॥
अतिप्रमुदिता जीवे हृश्चिकस्थे भवेत्सदा ।
सबन्धुवृद्धिं जानीयात् सर्व्वकामगुणान्विताम् ॥
सुशीलस्था चतुर्थस्थे पञ्चमस्थे बहुप्रजा ।
सपत्नीयुक्ता षष्ठस्थे बहुमूला स्ववेश्मनि ॥
विरूपा दुर्भगा स्वार्थ्या व्यनक्ति विमलं यशः ।
सुतकर्म्मसु संसिद्धिं प्राप्नोति दशमे गुरौ ॥
विचित्रमाल्याभरणा पुत्त्रयुक्ता च कन्यका ।
सुवर्ण-मणि-वस्त्राढ्या भवत्येकादशे गुरौ ॥
व्ययस्थे सततोदारा दद्यात्त्वर्थमतन्द्रिता ।
आयुर्धर्म्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ॥
प्रभूतगुणयुक्ता स्यात्तपणा च धनाश्रिते ।
पुंश्चली देवररता कन्या शुक्रे तृतीयगे ॥
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ।
नित्यं चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ॥
पत्युश्च बन्धुवर्गस्याविराढ्या षष्ठगे भृगौ ।
बन्धकी सप्तमस्थे स्याद्भार्गवे लोकगर्हिता ॥
व्याध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ।

भार्गवे नवमस्थे स्याद्धर्मयुक्ता प्रियंवदा ॥
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ।
विधवार्थान्विता त्याज्या भवत्येकादशे भृगौ ॥
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ।
सौरे लग्नगते कन्या पुंश्चली दुर्भगा कृशा ॥
निर्धना कृपणा दीना धर्मस्थार्कात्मजे भवेत् ।
पुनर्हीनार्त्तिदुःखार्त्ता हृद्रोगेण च पीडिता ॥
पञ्चमस्थे सुपुत्रा स्यात् षष्ठस्थे हतशात्रवा ।
गर्भस्रावार्दिता नित्यं सप्तमस्थेऽर्कनन्दने ॥
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मव्रता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थ-सप्तमस्थस्य मृत्यु-वैधव्यकृद्भवेत् ।
राहुरेवेष्वथान्येषु निष्फलः स्याद्व्ययस्थितः ॥
पञ्च पाणिग्रहे दोषान् वर्जयेदेव चिन्तकः ।
दारिद्र्यं मृत्यु-वैधव्यं पौंश्चल्यमनपत्यताम् ॥
अष्टमासार्द्धमासाश्च तीर्थे वार्थे शुभाशुभाः ।
लग्नस्य पञ्चमस्थानाच्छुभस्थानस्थितान् ग्रहान् ।
कार्य्योविवाहो निर्दोषः कालो यस्मात्सुदुर्लभः ॥
मूर्त्तिकर्मात्मजसुखत्रित्रिकोणगते गुरौ ।
भार्गवे च विनश्यन्ति सर्वे दोषा विलग्नगे ॥
त्यक्त्वा च व्यय-नैधनानि तु सदा सौम्यग्रहाः सशुभं
चोत्सृज्यासुरपूजितः शशधरोदुश्चिक्यलाभार्थगः ।

पापस्य ×××× चन्द्रभवनं प्राप्ता चितेर्नन्दनं
मुक्ता नैव भवेत् स वर्त्तिगमथो पाणिग्रहेष्विष्टदा[१] ॥
यो जन्मनि जन्मगृहादष्टमराशिस्थितो भवेत् खचरः ।
स विवाहलग्नवर्त्ती शुभोऽप्यशुभं ददाति फलम् ॥

शौनकः ।

पञ्चभिरिष्टं रिष्टञ्च पुष्टमनिष्टमादेश्यं ।
स्थानादिबलसमेतैश्चतुर्भिरपि यवनैः ॥

अर्केऽनुकूले सुरपूजिते च
वृद्धिं प्रपन्ने भृगुनन्दने च ।
भवन्ति नार्य्यः सुत-सौख्य-सम्पत्-
सौभाग्यभाजः चतशस्त्रुपचाः ॥
यद्दाह्वे सूर्य्यविधूममर्द्दे
शृङ्गाटके धूमशिखे द्रुमे च ।
उपप्लवप्रापिणि चक्रवन्धे
प्राप्ते च पापान्तरगे च चन्द्रे ॥
अस्तन्तयोर्वा परिवेशिणोर्वा
पाणिग्रहः खण्डितबिम्बयोर्वा ।
शीतोष्णभासोर्विपरीतखेट-
कवन्धकालान्तिकयोर्निरस्तः ॥

पराशरः ।

दशपलशुल्ककपाले समघनवृत्ते षडङ्गुलोत्सेधे ।

(१) श्लोकोऽयं आदर्शानुरूप एव मुद्रितः परन्त्वयं न समीचीनो भाति ।

द्वादशमुखपरिणाहे जलपलषष्टिप्रपूरणी घटिका ॥

वाक्यः ।

ताम्रपात्रं त्रिवलिकं षडङ्गुलसमायुतं ।

इत्युद्वाहकालः ।

---

## अथ वैवाहिककर्मकालः ।

वाक्यः ।

कण्डनदलनयवाङ्कुरमण्डपमृद्वेदिवर्णकाद्यखिलं ।
तत्सम्बन्धिगतागतमृचे वैवाहिके कुर्य्यात् ॥
वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे ।
जामित्रराशौ कन्याया लग्ने शुभसमन्विते ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

इति वैवाहिककर्मकालः ।

---

## अथ परिणयनकालनिर्णयः ।

तत्र वृहस्पतिः ।

पितुर्गेहेतु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणोमदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीसङ्गृहीता यो ब्राह्मणोमदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

आपस्तम्बः ।

प्राप्ते च द्वादशे वर्षे रजस्त्रीणां प्रवर्त्तते ।
यस्तां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
त्रिंशद्वर्षोद्दशाब्दान्तु भार्य्यां विन्दति नग्निकां ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुः ।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
अष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः ।
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयं ॥

इति परिणयनकालनिर्णयः ।

---

## अथ देयकन्याकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

संवर्त्तः ।

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

अत्र 'वृषली' रजस्वला ।

तथाच देवलः ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी वा रजस्वला ॥

वृहस्पतिरपि ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

विष्णुः ।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा भवेत् वृषली ज्ञेया हरंस्तान्न दुष्यति ॥

एतच्च प्रायिकं, कासाञ्चिदर्वागेव रजोदर्शनात् ।

अतएव यमः ।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥

यत्पुनर्यम-पराशरापस्तम्बैरुक्तं ।

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितं ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्त्तते ॥

एतदपि प्रायिकं, कासाञ्चित्तत्रापि रजोदर्शनासम्भवात् ।

अतएवाह मनुः ।

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

एवञ्च रजोदर्शनात्पूर्वं विवाह इत्युक्तं भवति ।

तथाच गौतमः ।

प्रदानात्प्रागृतोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके ।

यमः ।

तस्मादुद्वाहयेत्कन्यां यावन्नर्त्तुमती भवेत् ।

वशिष्ठः ।

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

संग्रहे ।

यावच्चेलं न गृह्णाति यावत्क्रीड़ति पांशुभिः ।
यावद्दोषं न जानाति तावद्भवति नग्निका ॥

अमरसिंहः ।

नग्निकानागतार्त्तवेति ।

अङ्गिराः ।

अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना तु सा प्रोक्ता कुचहीना तु नग्निका ॥
व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्ते तु कन्यकां ।
पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलां ॥
तस्मादुद्वाहयेत्कन्यां यावन्नर्त्तुमती भवेत् ।
विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

वृहस्पतिः ।

व्यञ्जने तु कुलं हन्यात्पितॄन् हन्यात् पयोधरे ।
हन्यादिष्टञ्च पूर्त्तञ्च प्राप्ते रजसि कन्यका ॥

पराशरः ।

माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च ।

त्रयोऽपि[1] नरकं यान्ति दृष्ट्वा कन्यां रजस्वलां॥

पैठीनसिः।

यावन्नोद्भतौ स्तनौ तावद्देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देया।

याज्ञवल्क्यः।

अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ।

नारदः।

यावन्तश्चर्त्तवस्तस्याः समीयुः पतिना विना।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति तां॥

यत्पुनर्मनुनोक्तं।

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि।
न चैवैनां प्रयच्छेत गुणहीनाय कर्हिचित्॥

तद्गुणवति सम्भवति गुणहीनाय न दद्यादित्येवंपरं, न पुनर्गुणहीननिषेधार्थं।

यत आह यमः।

दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः।
न त्वेव गुणहीनाय नोपरुध्याद्रजस्वलां॥

इति देयकन्याकालनिर्णयः।

---

(१) त्रयस्ते इति ग०।

## अथ स्वयम्वरकालनिर्णयः ।

यमः ।

कन्या द्वादशमे वर्षे प्रदातुर्न गृहे वसेत् ।

भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयं ॥

मनुरपि ।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।

ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिं ॥

अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयं ।

नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

सोऽपि न पापमाप्नोतीत्यर्थः ।

बौधायनः ।

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

'सदृशे' गुणवति ।

वसिष्ठः ।

कुमारी ऋतुमती त्रीणि त्रीणि वर्षाण्युपासीत, ऊर्ध्वं त्रिवर्षेभ्यः पतिं विन्देत तुल्यं ।

यत्पुनर्गौतमेनोक्तं ।

त्रीनृतूनतीत्य स्वयं युज्यते ।

यच्च विष्णुनोक्तं ।

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयम्वरं ।

ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तया ॥

तदृतुत्रयादर्वाक्निषेधपरं, यदा तु न वर्षत्रयमवस्थातुमलं तदा ऋतुत्रयादूर्ध्वमपि वरयेत्।

कात्यायनः।

वरयित्वा तु यः कश्चित्प्रणश्येत् पुरुषो यदा।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पतिं॥

'रक्तागमान्' ऋतून्।

नारदः।

प्रतिगृह्य तु यः कन्यां वरोदेशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरं॥

'प्रतिगृह्य' वरयित्वा।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयम्वरविधायकं पूर्व्वोदाहृतविष्णु-गौतम-नारद-कात्यायनवचनसमानार्थत्वेन व्याचक्षते, तदयुक्तं। तत्र हि पितुरदानं प्रकृतं न तु वरयितुर्देशान्तरगमनं मरणं वा तस्मात् क्रमानुरोधात्पूर्व्वैव व्याख्या श्रेयसी। यदा तु नैवं कश्चित्स्यात्कन्या राजानमाव्रजेत्, अनुज्ञया तस्य वरं पतीच्छ वरयेत् स्वयं, कश्चिद्दाता उक्तेषु मध्ये।

याज्ञवल्क्यः।

गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयम्वरं।

'गम्यं' गमनार्हं।

इति स्वयम्वरकालनिर्णयः।

---

## अथ चतुर्थाश्रमस्वीकारकालनिर्णयः ।

उषित्वैवं ततः सम्यक् तृतीयं ह्याश्रमं प्रति ।
चतुर्थमाश्रमं गच्छेत् कृतहोमो जितेन्द्रियः ॥

मत्स्यपुराणे ।

चतुर्थं त्वायुषः शेषं शमयित्वा शमं व्रजेत् ।
केश-लोम-नखान्वाप्य वानप्रस्थोमुनिस्ततः ॥
आश्रमादाश्रमं सद्यः पूतो भवति कर्मभिः ।
सोऽपि तस्य पिता तादृक् क्रमेण सुसमाहितः ॥
वानप्रस्थं समास्थाय चतुर्थाश्रममभ्यगात् ।
वने चरन्विहृत्यैव[१] तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत् ॥

तृतीयं भागमिति यावता कालेन तपःसिद्धिः विषयाभिलाषस्य निवर्त्तते तावद्विवक्षितः, न हि मुख्यस्तृतीयः कालो न यावति च वयसि मदावेशः तदा तदा संवेद्यते तदा परिव्रजेदित्यर्थः ।

आश्रमादाश्रमं गत्वा कृतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजेत्प्रेत्य वर्द्धते ॥

समुच्चयपक्षाश्रयमेतत्, यदा गृहस्थाश्रम-वानप्रस्थाश्रमौ कृत्वो-भयत्रावश्यकानुष्ठानेन जितेन्द्रियः तदा प्रव्रजन्वर्द्धत इति पूर्वाश्रम-धर्मानुवादः ।

मार्कण्डेयपुराणे ।

अनुत्पाद्य सुतान्देवानसन्तर्प्य पितॄंस्तथा ।

(१) वनेष्वनुविहृत्यैवेति ख० ।

भूतादींश्च कथं मौढ्यात् स्वर्गतिं गन्तुमिच्छसि ॥

कालिकापुराणे।

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः।

ऋणानि त्रीण्यपाकृत्य दत्त्वा यज्ञैश्च संन्यसेत् ॥

गुरुणानुमतः स्नात्वा सदारो वै द्विजोत्तमः।

अनुत्पाद्य सुतं नैव ब्राह्मणः प्रव्रजेद्गृहात् ॥

ब्रह्मवैवर्त्ते।

ऋणत्रयापाकरणमविधायाजितेन्द्रियः।

राग-द्वेषावनिर्जित्य मोक्षमिच्छन् पतत्यधः ॥

मनुः।

ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्।

अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥

मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते, अतएव मोक्षं सेवमान इत्युक्तिः।

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।

दत्त्वा तु शक्तितो यज्ञैर्मनोमोक्षे निवेशयेत् ॥

अनधीत्य द्विजोवेदं अनुत्पाद्य तथात्मजान्।

अनिष्ट्वा चैव यज्ञेषु मोक्षमिच्छन् व्रजत्यधः ॥

समुच्चयपक्षमाश्रित्येतरपक्षनिन्दावचनं न पुनः प्रतिषेधः उदितानुदितहोमवत्, अन्यथा "यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेदिति प्रत्यक्षजावालश्रुतिविरोधः स्यात्। "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः

एष वा अनृणोयः पुत्री यज्वी ब्रह्मचारी वासीति एतत्तैत्तिरीय-श्रुतिवचनमपि समुच्चयपचाश्रयमेव।

शङ्ख-लिखीतौ ।

वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः परिव्रजनमेवाग्नि-मात्मन्यारोप्य व्यपगतभय-लोभ-मोह-क्रोध-शोक-द्रोह-मद-मत्सर-कलत्रस्योचितवेदनावस्थितमनसः श्रद्धाद्यनियतं भवति तस्मात्तद्-हरेवोपासीत यदहरेव संन्यसेत् सर्व्वारम्भपरिग्रहानुत्सृज्य ।

विष्णुपुराणात् ।

पुत्र-द्रव्य-कलत्रेषु त्यक्तस्नेहो नराधिपः ।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥
दिवा दिव्ये च भोगे तु विषये पञ्चलक्षणे ।
दृष्टानुश्राविके चैव विरक्तः संन्यसेद्वनात् ॥

कूर्मपुराणे ।

किञ्चिच्छ्रेयस्करतमं लोकेऽस्मिन् ब्रह्मसत्तमाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥
आराध्य तपसा देवं योगिनं परमेश्वरम् ।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥
वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकं ।
व्याध्यदिष्टोविरक्तो वा नातुरोवाथ दुःखितः ॥
आतुराणां विशेषोऽस्ति न विधिर्न च सत्क्रिया ।
प्रैषमात्रन्तु सन्न्यास आतुराणां विधीयते ॥
उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिगोचरे ।

भयभीतस्य सन्न्यासं अङ्गिरा मुनिरब्रवीत् ॥
विरक्तः सन्न्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ।
अथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेत्तया ।
अकर्त्तुमसमर्थोऽपि जुहोति यजतिक्रियाः ॥
अन्धः पङ्गुर्दरिद्रोवा विरक्तः सन्न्यसेत् द्विजः ।
सर्व्वेषामेव वैराग्यं जायते सर्व्ववस्तुषु ।
तदैव सन्न्यसेद्विद्वान्नान्यथा पतितो भवेत् ॥

यमः ।

चीर्णवेदव्रतोविद्वान् ब्राह्मणो मोचमाश्रयेत् ।
समः सर्व्वेषु भूतेषु कृतकृत्यः परिव्रजेत् ॥
पुनर्दारक्रियाभावे मृतभार्य्यः परिव्रजेत् ।
वनाद्वा धूतपापो वा परं पन्थानमाश्रयेत् ॥

कूर्म्मपुराणे ।

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
यत् व्रजेत् ब्रह्मचर्य्यादीन् यदीच्छेत्परमाङ्गतिं ॥
दारानाहृत्य विधिवद्यथावद्विविधैर्मखैः ।
यजेदुत्पादयेत्तत्स्थो विरक्तो यदि सन्न्यसेत् ॥
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजं ।
न गार्हस्थ्यं गृहीत्वा तु सन्न्यसेत् बुद्धिमान् द्विजः ॥
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तदैव सन्न्यसेद्विद्वाननिष्ट्वा विचारयेत् ॥

शातातपः।

क्लीबे देशान्तरस्थे वा पतिते प्रव्रजिते तथा[१]।
योगशास्त्राभियुक्ते च न दोषः परिवेदने॥

सुमन्तुः।

व्यसनासक्तचित्तो वा नास्तिको वाथ वाग्रजः।
कनीयान् धर्मकामस्तु आधानमथ कारयेत्॥
पितृव्यपुत्त्रान् सापत्न्यान् परनारीसुतांस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥

यम-वाष्कलौ।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः।

इति पाठः। 'परनारीसुतान्' दत्त-क्रीतकादीनाह।

वशिष्ठः।

अष्टौ दश-द्वादशवर्षाणि भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति,

अनिविष्टं मात्रोद्रे, भवन्ति चात्र श्लोकाः।

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः॥
उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा।
राजयक्ष्मादियुक्तश्च न न्याय्यः स्यात् प्रतीक्षितुं॥
षण्ड-वामन-कुब्जान्ध-पतितोन्मत्त-कुण्डकान्।

---

(१) पतिते व्रजिते तथेति पाठे नाक्षराधिक्यदोषो भवितुमर्हतीति विभावनीयं।

रोगि-वधिर-मूकेषु न दोषः परिवेदने ॥

सुमन्तुः ।

ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

तथा वृद्धवशिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथं ।

अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

एतच्चाधिकारिणि भ्रातरि अकुर्वति वेदितव्यं। अनधिकारिणि व्यतिक्रमाभावाच्च तदनुज्ञाग्रहणं युज्यते ।

अतएव हारीतः ।

सोदराणान्तु सर्वेषां परिवेत्ता कथं भवेत् ।

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

अस्यार्थः। सोदरेऽग्रजेऽधिकारिणि अकृतविवाहे विवाहमीहमाने सन्निहितेऽवतिष्ठति तदनुज्ञां गृहीत्वाधानवद्विवाहो न कदाचनापि कर्त्तव्यः।

यदाहोशनाः ।

पिता पितामहो यस्य नाग्रजोवाथ कस्यचित् ।

तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

सुमन्तुः ।

पितुर्यस्य तु नाधीतं कथं पुत्रस्तु कारयेत् ।

अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

अत्राप्यनुज्ञाते स्थिते वा शातातपः ।

प्रथमादाश्रमादापि विरक्तो भवसागरात्।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्॥
अथ तृतीयं सम्प्राप्य गृहस्थाश्रममुत्तमं।
चतुर्थमायुषोभागं तत्स्थो वापि परिव्रजेत्॥

इति चतुर्थाश्रमकालनिर्णयः।

---

## अथाग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

तत्र मनु-शातातपौ।

दाराग्निहोत्रसम्बन्धं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

स च सोदरोभ्राता नान्यजो नान्यमातृजः। एतदेवोत्तरत्र स्फुटीभविष्यति, तथा पतितोन्मत्त-नपुंसकान्ध-वधिर-मूक-जड़-कुब्ज-कुष्ठि-श्वित्रि-राजयक्ष्मोदराद्यसाध्यमहारोगाभिभूत-नास्तिक्य-शास्त्रयोगिप्रव्रजितचिरकालप्रोषितेषु एतेष्वदोष इत्यवगन्तव्यं। एतेषां परिणयादावधिकारस्याविद्यमानत्वात्।

अत एव छन्दोगपरिशिष्टे कात्यायनः।

देशान्तरस्थ-क्लीवैकवृषणांश्च सहोदरान्।
वेश्यातिसक्तांश्च पतित-शूद्रतुल्यातिरोगिणः॥
षण्ड-मूकादि-वधिर कुब्ज-वामन-कुण्ठकान्।
अतिवृद्धानदारांश्च कृषिसक्तान् नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुलटोन्मत्त-चोरांश्च परिविन्दन्न दुष्यति॥

अग्नयः परिविन्दन्ति कनिष्ठस्य या च कन्या विरूपिका।

एतच्चाधिकाररहिते भ्रातरीति पूर्व्ववचनादतिकुरूपा ज्येष्ठापि सती न कनिष्ठाया विवाहविघ्नहेतुर्भवितु मर्हतीति।

इत्यग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

---

## अथावसथ्याधानकालनिर्णयः।

तत्र याज्ञवल्क्यः।

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते॥

अत्र केचिदाहुः।

दाराग्निहोत्रसंयोगं यः कुर्य्यादग्रजे स्थिते।

इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं भवति शब्दप्रवृत्तेरन्यनिवृत्तिफलत्वादिति तदयुक्तं अन्यनिवृत्तेरशाब्दत्वात्।

अतएवाह गार्ग्यः।

सोदर्य्ये तिष्ठति ज्येष्ठे न कुर्य्याद्दारसंग्रहं।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत्॥

ब्रह्मगर्भोऽपि।

याजनाध्यापनैश्चैव अनिन्द्येभ्योधनेन च।
उपासनं समादध्यात् स्वकाले परिवेदयन्॥

'स्वकाले' यथाविहितकाले।

तथाच स्मृतिः ।

आधानं विधिवद्देश्यकुलश्चद्धादयापि वा ।

महानधादरण्योर्वा दार-दायादकालयोः ॥

पारस्करः ।

आवसथ्याधानं दारकाले दायादकाले एकेषां ।

गौतमः ।

पुत्रमुत्पाद्यावसथ्याधानं कृत्वातिथीन् संपूजयेत् ।

व्यासः ।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।

पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः ॥

यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।

अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

ज्येष्ठस्याधिकारिण एतद्द्रष्टव्यं कनीयांश्च कृताग्निहोत्रेऽपि ज्येष्ठे भ्रातरि वेदाध्ययनाद्यासक्तो नैवाग्निपरिग्रहमकुर्वन्नपि प्रत्यवायेन सह संगृह्यते ।

अत्र गर्गः ।

पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः ।

ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

अनधीतवेदस्यापि समावृत्तविवाहः सत्यव्रतेन दर्शितः ।

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा ।

अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

इत्यावसथ्याधानकालनिर्णयः ।

## अथाग्निहोत्रकालः।

तत्र कात्यायनः।

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥
रात्रेस्तु षोड़शे भागे ग्रह-नक्षत्रभूषिते।
कालं त्वनुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥
रेखामात्रं प्रदृश्येत तस्मिन्निसमन्वितः।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्॥

शङ्खः।

सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।

बौधायनः।

आसायं कर्मणः प्रातराप्रातः सायकर्मणः।
आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरात्॥

लौगाक्षिणीयपरिशिष्टे।

ऋषयोह स्म प्राजापत्याः आसंस्ते अग्निहोत्रिणां पक्षान्ते समस्त-होमानपास्य तथा द्विरात्रीय-षड्रात्रयो द्विमासार्द्धमासायाग्निहोत्र-मजुहुवुस्तस्मादायावेर आमयाव्यार्त्तौवार्धमासायाग्निहोत्रं जुहुयात् उपसेव्येऽहनि प्रातःसायं चतुर्द्दश चतुर्गृहीतानि प्रातश्चतुर्द्दश[1]।

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्त्वयं न समीचीन प्रतिभाति।

चतुर्दशग्रहणमुपलक्षणार्थं, कदाचित् पञ्चदशापि भवन्ति कदाचिच्चतुर्दशहीनानि कदाचित् षोड़शानि ।

मरीचिः ।

पञ्चहोमानथोदत्त्वा गत्वा कस्माच्चिवर्त्तते ।
होमं पुनः प्रकुर्वीत भवेच्च न स दोषभाक् ॥

इत्यग्निहोत्रकालनिर्णयः ।

---

## अथ प्रासादाद्यारम्भकालः ।

यथाकालं शुभं ज्ञात्वा सदा भवनमाचरेत् ।
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥
वैशाखे धन-रत्नानि ज्यैष्ठे मृत्युस्तथैवच ।
आषाढ़े भृत्य-रत्नानि पशुवर्गमवाप्नुयात् ॥
श्रावणे भृत्यलाभश्च हानिर्भाद्रपदे भवेत् ।
पत्नीनाश आश्विने स्यात्कार्त्तिके धन-धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतोभयम् ॥

'भक्तं' भक्ष्यमात्रोपलक्षणं ।

लाभश्च वह्नुशो विन्द्यादग्निं माघे विनिर्द्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥

विश्वकर्म्ममते ।

चैत्रे शोकाकुलोभर्त्ता वैशाखे च धनान्वितः ।
ज्यैष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥
श्रावणे धनवृद्धिः स्यान्नभस्ये न वसेद्गृही ।

कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।

'सहस्यः' पौषः ।

माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा ॥

तथा सङ्ग्रहे ।

व्याधिः शोकोभवेच्चैत्रे वैशाखे धनरत्नयुक् ।
गो-महिष्यादिभिर्युक्तो गृहमेधी सदैव हि ॥
ज्यैष्ठे मृत्युमवाप्नोति आषाढ़े पशुनाशनम् ।
भृत्यलाभः सुरत्नानि लाभोऽर्थस्य तथैव च ॥
श्रावणे भृत्यलाभस्तु धनवृद्धिरनाकुला ।
मासि भाद्रपदे गेहं दुःखदं जायते ध्रुवम् ॥
तत्र सर्व्वस्वहानिस्तु भवेत्तद्गृहमेधिनः ।
आश्विने तु भवेन्नित्यं पत्नीनाशस्तथा कलिः ॥
कार्त्तिके स्याद्धनं धान्यं भृत्यनाशोऽप्यहर्निशम् ।
अत एव प्रशास्यन्ते प्रासादारम्भणे सुताः ॥
मार्गशीर्षे गृहारम्भो धनलाभसुखप्रदः ।
भक्ष्यं वै विविधं तत्र हस्त्यश्वादिसुरत्नकम् ॥
वास्तुलाभः शुभश्चात्र प्रजालाभो महानपि ।
मित्राणां चैव पुत्राणां स्त्रीणां लाभः परोभवेत् ॥
पौषे भीतिः परिज्ञेया तस्कराणां सुदारुणा ।
धन-धान्यादिलाभः स्यात् पुत्त-मित्रादिसम्पदः ॥
माघे वह्निभयं ज्ञेयं सर्व्वदुःखापहस्तदा ।

फाल्गुने चैव विज्ञेयो लाभः काञ्चनजः शुभः ॥
पुत्रलाभो महांश्च सुख-सौहृद्‌संयुतः ।
इति मासफलं प्रोक्तं त्रैविध्यमधुना ब्रुवे ।
उत्तमं मध्यमञ्चैव कनिष्ठञ्चेति तत् त्रिधा ॥
वैशाखे श्रावणे चैव मार्गशीर्षे च फाल्गुने ।
उत्तमास्ते समाख्याताः कथ्यन्ते मध्यमास्तथा ।
आषाढ़े कार्त्तिके पुष्ये मध्यमाश्चेति कीर्त्तिताः ॥
कनिष्ठांस्तान् समाख्यास्ये निशामय समासतः ।
चैत्रो ज्यैष्ठो नभस्यः स्युरीषोमासाः कनिष्ठकाः ॥

'ईषः' आश्विनः ।

फलमेषां समासेन कल्पितं तत्परिस्फुटम् ।

अपराजितपृच्छायाम् ।

रवौ कन्या-तुलालिस्थे वास्तौ पूर्वं शिरः स्थितम् ।

'अलिः' वृश्चिकः ।

चापे च मकरे कुम्भे दक्षिणेन व्यवस्थितम् ।
आदित्यवारयोगेन स वास्तुः सरति भ्रमात् ॥
यत्र भानुः शिरस्तत्र लक्षितव्यं रविक्रमात् ।
देवागारं गृहञ्चैव न कुर्याच्छीर्षसम्मुखम् ॥
मृत्युरोगभयानि स्युः प्रशस्तं कुक्षिसम्मुखम् ।
तुला-वृश्चिक-कन्यासु भास्करो यदि संस्थितः ।
न तदा प्राङ्मुखं कुर्यात् गृहं भवति निष्फलम् ॥
धनुर्मकर-कुम्भेषु यदा तिष्ठति भास्करः ।

तदा याम्यमुखं वेश्म राज-चोराग्निभीतिदम् ॥
मीने मेषे वृषे प्रत्यङ्मुखं स्त्रीकलहावहम् ।
मिथुने कर्कटे सिंहे न कुर्याच्चोत्तराननम् ।
तथा कृतं भवेद्वेश्म दोष-शोक-भयावहम् ॥

विश्वकर्म्मा ।

रवौ कन्या-तुलालिस्थे गृहं वारुणदिङ्मुखम् ।
न कुर्यात्तद्धि शून्यं स्यात्र च वृद्धौ भवेत् प्रभो ॥
दक्षिणाभिमुखं कुम्भ-मृगचापस्थिते रवौ ।
कुर्वीत निष्फलं तस्मात् नृपदण्ड-वधादिकृत् ॥
न मीन-वृष-मेषस्थे कुर्वीत प्राङ्मुखं रवौ ।
तद्भवनं वह्निचुद्रराजचोरादिकक्षतः ॥
रवौ मिथुन-सिंहस्थे न कर्कस्थेऽप्युदङ्मुखम् ।
कुर्यात्तद्धि दरिद्रत्वं दद्यात्स ऋणदोषताम् ॥

विश्वकर्म्मप्रोक्ते ।

अधुना कुण्डलीचक्रं रविचक्रायुधं ध्रुवम् ।
रेखाद्वयं प्रकर्त्तव्यं तत्र वै पूर्व्वपश्चिमम् ॥
दक्षिणोत्तरगन्तद्रेखैका वह्नि-वायुगा ।
ईश-नैर्ऋतगा चैका तत्र राशींस्तु विन्यसेत् ॥
क्रमादीशानरेखाया रेखाद्वादशकं भवेत् ।
तत्र कन्यादिसिंहान्ता राशयो द्वादश क्रमात् ॥
यत्र यत्र भवेद्भानुस्तत्र वास्तुशिरः स्थितम् ।
स्वस्थानात् सप्तमे राशौ वास्तोर्दृष्टिः पतेत् क्रमात् ॥

यद्रेखायां भवेत्सूर्य्यो वास्तुमस्तकसंयुतः ।
तद्रेखायस्थितं राशिं संमुखञ्चैव दूषयेत् ॥
रविदृष्टिगतं राशिं जानीयात्त्वभिधामितम् ।
रविभुक्तस्तु यो राशिः स च दग्धः प्रकीर्त्तितः ॥
शिरःस्थिते न कर्त्तव्यं रवौ द्वारं कथञ्चन ।
यद्यज्ञानात्कृते तस्मिन् चयं स्याद्‌गृहमेधिनः ॥
वास्तुदृष्टिस्थिते राशौ यद्द्वारन्तु वेश्मनः ।
धननाशो भवेत्तत्र पुत्त्र-मित्र-पशुक्षयः ॥
रविरेखायते राशौ कृते रोगभयं महत् ।
रोग-चौरादिभिश्चैव वह्नि-राजकुलादिभिः ॥
रविदृष्टिगते राशौ गृहद्वारन्तु यत्र हि ।
तत्र संवसतो नित्यं रोग-दुःखं सुदारुणम् ॥
दग्धे द्वारे कृते ज्ञानात्तद्भर्त्तुः स्याद्धनक्षयः ।
नक्रस्थे कुम्भगे भानौ सिंहगे कर्कटे तथा ।
पूर्वास्यं पश्चिमास्यञ्च तदा गेहं प्रकारयेत् ॥
फलमेतत् समुद्दिष्टं वर्णानां भवनाश्रयम् ।
कन्यादौ नारभेद्गेहं मङ्गलार्थी कदाचन ॥

कुण्डलीचक्रस्य फलितार्थमाह ।

फलोद्देशं प्रवक्ष्यामि प्रत्येकेन परिस्फुटम् ।
सुखवृद्धिस्तथा शान्तिः सर्वपापोपमर्दनम् ॥
वस्तुनाशस्तथा तल्पं नक्राख्ये फलमीदृशम् ।
भूरिलक्ष्मीप्रदश्चैव पांशुभिश्च यतो गृही ॥

एवमादि फलं ज्ञेयं कुम्भे वै सर्व्वमासि च ।
पुत्राः पौत्राः प्रवर्द्धन्ते लक्ष्मीरविचला भवेत् ॥
शूरश्च वृत्तिमान्भर्त्ता सुख-सौभाग्यसंयुतः ।
सिंहे लविकलं सर्व्वमेवमादि फलं भवेत् ॥
हृष्टः पुष्टः सुसम्पन्नो बहुगात्रः श्रियान्वितः ।
भर्त्ता वै लभते सौख्यं कर्क्के च फलमीदृशम् ॥
मेषे वृषे तुलायाञ्च वृश्चिके च यदा रविः ।
उदगास्यं गृहञ्चैव प्रेतदाहं प्रकारयेत् ॥
एतेषान्तु क्रमेणैव फलमत्र वदाम्यहम् ।
शुभलक्ष्मीफलं सौम्यं पुत्र-पौत्रसमृद्धये ॥
मृष्टभाषी भवेन्नूनं सर्व्वसौभाग्यसंयुतः ।
एवमादि फलं मेषे भर्त्ता वै लभते चिरम् ॥
वृषे सौख्यं चिरा लक्ष्मीः पशुवृद्धिरनाकुला ।
पुत्राश्च बहवस्तस्य जायन्ते शोभनास्त्रियः ॥
एवमादि फलं भर्त्तुस्तत्र प्रोक्तं मनीषिभिः ।
तुलायां प्रोच्यते सम्यक् फलमिष्टतमं नृणाम् ॥
धनं धान्यं सुखं भोगो गोऽश्व-पुत्रसमृद्धयः ।
बहुमित्रास्तथा भृत्याः पशवः शोभना गृहे ॥
पुण्यराशिस्तथा भर्त्तुस्तुलायामीदृशं फलम् ।
द्विषतां सङ्क्षयः सम्यक् स्वकुले वृद्धिरेव च ॥
धनवान् भोगसम्पन्नो भर्त्ता स्यादलभान्वितः ।
एवमादि फलं तत्र वृश्चिके जायते ध्रुवम् ॥

नक्र-कुम्भौ प्रतिज्ञेयौ प्रकाम्ये मन्दिरे हितौ ।
हरि-कर्कटकौ ज्ञेयौ प्रतीचीमुखवेश्मनः ॥

'हरिः' सिंहः ।

मेषोवृषस्तथा चैतौ सौम्यागारम्भणे हितौ ।
तुला च वृश्चिकश्चैव दक्षिणस्यासुभौ हितौ ॥
कोणस्थानामथोवक्ष्ये कन्यादीनां फलं यथा ।
यतः कन्यास्थितोध्वाङ्क्षो धनुर्धूममसमाश्रयात् ॥
शुनि मीन-खरे चैव मिथुनं सर्वदा श्रितम् ।
कन्यां प्राप्ते रवौ सम्यक् नारभेत गृहं सुधीः ॥
न वृद्धिस्तत्र जायेत पुत्त्र-पौत्त्रपशुचयः ।
सर्वदार्त्तियुतोभर्त्ता वसेदत्र न संशयः ॥
धनुस्थिते रवौ कार्यं नैव गेहं कदाचन ।
शत्रुभिर्घात्यते तत्र जायन्ते हि न सम्पदः ॥
अथवा राजदण्डेन पीड्यतेऽसौ वसन् गृही ।
यदा भानुस्तु मीनस्थस्तदा गेहं न कारयेत् ॥
क्षतश्चेद्व्याधिशोकाय भयाय विपुलाय च ।
अधीरत्वं तदा तस्य ग्लानिः स्यान्मीनतः फलम् ॥
मिथुनस्थो यदा भानुस्तदा वेश्म न कारयेत् ।
अग्निना दह्यते तद्वै वेश्म दुःखप्रदं सदा ॥
मीनस्थे वह्निदिग्भागे गृहारम्भोऽग्निजीविनाम् ।
मिथुने त्वाश्रयारम्भ ईशे सन्न्यासिनां हितः ॥
वायव्ये कन्यका ज्ञेया गृहारम्भः सुखप्रदः ।

स्वरोपजीविनां चैव वेश्यादीनां सदैव हि ॥

नैर्ऋत्यां कार्मुके च स्यादारम्भः श्वपचां गृहे ।

इदानीं कथये वेश्म राशि-माससमागमम् ॥

चैत्रे मेषो भवेद्यत्र तत्र गेहं न कारयेत् ।

कृते व्याधिर्महानत्र जायते गृहमेधिनाम् ।

ज्यैष्ठे तु मिथुनं यत्र तत्र द्वैधं भवेत् सदा ॥

'द्वैधं' द्वन्द्वयुद्धमिति यावत् ।

आषाढे कर्कटोदृष्टो नभस्ये कन्यका तथा ।

आश्विने तु तुला दृष्टा वृश्चिकः कार्त्तिके तथा ॥

चापं मार्गे भवेद्दुष्टं तेन मार्गो न शोभनः ।

माघे कुम्भस्तु वै दुष्टस्तत्रारम्भो न शोभनः ॥

मासि मासाष्टकञ्चेति दूषितं वै परस्परं ।

तेन चैषु न कर्त्तव्यं मन्दिरं शुभमिच्छता ॥

तथा ।

सिंहगं मेषगं चैव गुरुं यत्नेन वर्जयेत् ।

अस्तङ्गते गुरौ शुक्रे गृहारम्भो न शस्यते ।

नातिक्षीणे निशानाथे गृहारम्भो भवेदिह ॥

विष्णुधर्मोत्तरे ।

प्रावृट्काले न कर्त्तव्यं वास्तुकर्म विजानता ।

तपनः ।

कृष्णपक्षान्ते त्रिभागे कृष्णैकादशीमारभ्य दिनपञ्चके शुक्लस्याद्ये त्रिभागे शुक्लप्रतिपदमारभ्य दिनपञ्चके, एवं कृष्णैकादशीमारभ्य दिनदशकं त्रिविधं भवति ।

तथा ।

चतुर्थीं नवमीञ्चैव वर्जयेच्च चतुर्दशीम् ।

विश्वकर्ममते ।

तिथयो यत्र शस्यन्ते याः शुभा वास्तुकर्मणि ।
शस्ते मासि सिते पक्षे प्रतिपच्च द्वितीयया ॥
तृतीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
एकादशी-त्रयोदश्यौ पूर्णमासी प्रकीर्त्तिता ॥
एताः पूर्णेति विख्याता नामतस्तिथयस्त्विमाः ।
चतुर्थ्यां वाथ षष्ठ्यां वा दक्षिणास्यं विवर्जयेत् ॥
तत्र संवसतो यस्मान्महाव्याधिभयं भवेत् ।
तथा वाराः प्रशस्यन्ते रवि-मङ्गलवर्जिताः ॥
दिव्यान्तरीक्ष-क्षितिजैरुत्पातैर्भवपीड़ितम् ।
ग्रहोपसृष्टं सन्ध्याख्यं व्यतीपातहतञ्च यत् ॥

'ग्रहोपसृष्टं' पापग्रहदूषितम् ।

चन्द्र-तारानुकूले भे कर्त्तुः कार्य्यं विजानता ।
ध्रुवाणि तानि शस्तानि शाक्रवल्लेर्च्चतं तथा ॥

'ध्रुवाणि' रोहिण्युत्तरात्रयं चेति ।

वायव्यं वैष्णवं पुष्यं पौष्णं सावित्रमेव च ।

मत्स्यपुराणे ।

वज्र-व्याघात-शूलेषु व्यतीपातातिगण्डयोः ।
विष्कुम्भ-गण्ड-परिधान् वज्रयोगेषु कारयेत् ॥

विश्वकर्ममते ।

अथ योगान् प्रवक्ष्यामि वर्जिता ये मनीषिभिः ।
अतिगण्डो व्यतीपातः परिघो वज्र एव च ॥
गण्डं शूलश्च विष्कुम्भो व्याघातश्च सुदुःखदः ।
एतान् योगान् समावर्ज्य अभावे तेषु चैव हि ॥
विष्कुम्भे घटिकास्तिस्रः पञ्च वा वर्जयेत्सुधीः ।
वज्रे तु घटिकास्तिस्रो नव वा परिवर्ज्जयेत् ॥
अतिगण्डेषु वै षट्कं नव वा दोषदायकाः ।
गण्डे तु घटिकाः षड्वा व्याघाते नव षट् च वा ॥
शूले तु घटिकाः पञ्च सप्त वा दोषदा मताः ।
वैधृतौ च व्यतीपाते घटिकाषष्टिरेव च ॥
परिघे घटिकास्त्रिंशत् षट्त्रिंशदथवा शुभाः ।
एतेषां घटिकाः शेषाः सर्वाश्चान्याः शुभावहाः ॥
योगाः शुभावहाः कार्य्या वास्तुस्थापनकर्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥

तथा ।

करणान्यथ वक्ष्यामि वास्त्वारम्भे शुभाय वै ।
तैतिलं वणिजं नागं बालवं करणान्तरम् ।
धन-धान्यकराणि स्युः श्रेयसे च सुखाय च ॥

विष्णुधर्मोत्तरे ।

अङ्गारकदिनं नाम करणं विष्टिसंज्ञकम् ।

वर्जयेदित्यनुषङ्गः ।

मत्स्यपुराणे ।

श्वेते मैत्रेऽथ माहेन्द्रे गन्धे वाति विरोहणे।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत्॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्
स्तम्भोच्छ्रयादि कर्त्तव्यमन्यत्र परिवर्जयेत्।
प्रासादेऽप्येवमेव स्यात् कूप-वापीषु चैव हि॥

विश्वकर्म्ममते।

मुहूर्त्तान् कथयिष्यामि यैः कृतैः सर्वसम्पदः।
माहेन्द्रे रौहिणे चैव सावित्रे मित्रके तथा॥
गन्धर्वेऽभिजिति श्वेते मुहूर्त्ते कारयेत् गृहान्।
अथ साधारणान् ब्रूमो मुहूर्त्तान् सप्त चैव हि॥
विराजोविजयः श्वेतः सावित्रो मैत्रिकोऽभिजित्।
स्वस्त्येति समाख्याताः सर्वे सर्वार्थसिद्धिदाः॥
अथ वारविशेषेण वर्जनीयान् ब्रवीमि ते।
अर्यम्णोऽर्के तु वैराज्यश्चन्द्रे वै ब्रह्मराक्षसौ॥
पित्रा श्रेयौ कुजे नष्टौ बुधे चैवाभिजित्तथा।
पित्रब्राह्मौ तथा शुक्रे राक्षसाप्यौ बृहस्पतौ।
भौजङ्गेशौ मुहूर्त्तौ तौ वर्जनीयौ शनैश्चरे॥

विष्णुधर्म्मोत्तरे।

स्थिरलग्ने स्थिरांशे च कर्त्तुश्चोपचयान्विते।

'स्थिरलग्नानि' वृष-सिंह-वृश्चिक-कुम्भाः। 'कर्त्तुः' कर्त्तृराशेः, 'उपचयान्विते' त्रिषडेकादशस्थानस्थिते।

तथाच जातके।

त्रिषडेकादशदशमान्युपचयभवनान्यतोऽन्यथान्यानि ।

यस्य सौम्या ग्रहाः केन्द्रे त्रिकोणे चापि भार्गवः ।
पापाश्चोपचयस्थाने तस्मिन् कार्य्यं निवेशनम् ॥

बृहस्पति-शुक्र-बुध-चन्द्राः 'सौम्याः'। क्षीणेन्दु-रवि-मङ्गल-शनैश्चराः 'पापाः', संयुक्तो बुधश्च ।

तथाच लघुजातके ।

क्षीणेन्दर्क-यमाराः पापास्तैः संयुतः सौम्यः ।

'यमः' शनैश्चरः, 'आरः' मङ्गलः, 'सौम्यः' बुधः इति। 'केन्द्राणि' लग्नानि प्रथम-चतुर्थ-सप्तम-दशमस्थानानि।'त्रिकोणं' नवपञ्चमस्थानं।

तथाच जातके ।

केन्द्रचतुष्टयं कण्ठकञ्च लग्नात् सप्तदशचतुर्थानां सञ्ज्ञः इति,
नवपञ्चमं त्रिकोणं नवर्चत्रिकोणं चेति ।

केन्द्रस्थं वर्जयेत्पापं सर्व्वपक्षेण कर्म्मसु ।
केन्द्रसौम्ययुतं देवं न तु शून्यं कदाचन ॥

विश्वकर्म्ममते ।

अथ लग्नं प्रवक्ष्यामि गृहारम्भे शुभावहं ।
वृषो धनुस्तुला-कन्या मिथुनं कलसस्तथा ॥
लग्नान्येतानि शस्तानि गृह-प्रासादकर्म्मणि ।
कृतमेतेषु लग्नेषु सर्व्वसिद्धी भवेदिह ॥
एकादशे तृतीये च षष्ठे पापग्रहाः शुभाः ।
पापग्रहेऽष्टमे चैव मरणं प्राप्यते ध्रुवं ॥
चन्द्रार्कादिग्रहाः सर्व्वे स्ववेश्मे शुभदा गृहे ।

नीचगा न च नीचस्था न च तीक्ष्णांशुदूषिताः ॥

सूर्य्यादिग्रहाणां स्वक्षेत्राणि, सूर्य्यस्य सिंहः क्षेत्रं, सोमस्य कर्कः, भौमस्य मेष-वृश्चिकौ, बुधस्य मिथुन-कन्ये, गुरोर्धनुर्मीनौ, शुक्रस्य वृष-तुले, शनैश्चरस्य मकर-कुम्भाविति।

तदुक्तं लघुजातके ।

कुज-शुक्र-बुधेन्द्वर्क-ज्ञ-शुक्र-जीव-कुज-सौरि-शनि-गुरवः भेशा इति।

एते क्रमेण मेषादीनां द्वादशानां राशीनां ईश्वरा इत्यर्थः ।

'कुजः' मङ्गलः, 'ज्ञः' बुधः, 'जीवः' गुरुः, 'सौरिः' शनैश्चरः, 'भानि' राशयः, इति ।

तथोच्चं नीचञ्च परिभाषितं जातके ।

अज-वृष-मृगाङ्गना-कर्क-मीन-वणिज्यांशाः कथिता अर्काद्युच्चाः दश अष्टाविंशति-तिथीन्द्रियसप्तविंशतिविंशतिस्तात्रीचं सप्तममिति।

अस्यार्थः मेषस्याद्या दशत्रिंशांशा रवेरुच्चं। वृषस्याद्यास्त्रयस्त्रिंशांशाः सोमस्योच्चं। मकराद्या अष्टाविंशतिस्त्रिंशांशा मङ्गलस्योच्चं। एवं कन्यायाः पञ्चदशत्रिंशांशाः बुधस्योच्चं। कर्कटस्य पञ्च गुरोरुच्चं। मीनस्य सप्तविंशतिः शुक्रस्योच्चं । तुलाया विंशतिः शनेरुच्चं ।

एतत्सर्वं समालोच्य विबुध्य निपुणं सुधीः ।
आरभेत प्रयत्नेन वास्तुकर्म सुसिद्धिदं ॥

इति वास्तुप्रकरणं ।

---

## अथ प्रतिष्ठाकालनिर्णयः ।

तत्र सामान्यतः प्रतिष्ठाकालनिर्णयः ।

विष्णुधर्म्मोत्तरे ।

वज्र उवाच ।

कस्मिन् काले तु कर्त्तव्या प्रतिष्ठा भृगुनन्दन ।

मार्कण्डेय उवाच ।

शृणु कालं प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।
यस्मिन् काले कृता सा स्यात् फलसिद्धिप्रदायनी ॥
धन-धान्यवती स्फीता वरदा च तदा भवेत् ।
दृढ़ा भवति विख्याता चित्रिवेशे गुरौ युते ॥
ऐन्द्रे तेजस्विनी स्फीता भूतविग्रहकारिणी ।
तथाविधा तु सा स्फीता च्हदि दाहमवाप्नुयात् ॥
नित्याश्चर्य्ययुता त्वाष्ट्रे गम्यलोके तथैव च ।
अहिर्वुध्न्ये तथा नित्यं लोकानुग्रहकारिणी ॥
पित्र्ये विनाशमाप्नोति कर्त्तुश्च मरणावहा ।
सौम्ये सौम्या तथा कर्त्तुर्वरदा च तथा भवेत् ।
ऐन्द्राग्ने नाशमाप्नोति कर्त्तुः कृत्वा विनाशनं ॥
आश्विने श्रीमती भूत्वा तथा पुत्त्रमवाप्नुयात् ।
लोकाभिगम्या भाग्ये स्यात् कर्त्तुर्भाग्यवती भवेत् ॥
अशुभेऽपि यदा कार्य्या प्रतिष्ठा मनुजोत्तम ।
यस्मिन् युगे तु यो नाथो यो यो देवः प्रकीर्त्तितः ।
धन धान्यवती स्फीता कर्त्तुः श्रेयोजयावहा ॥

प्रभवादिभिः पञ्चभिः संवत्सरैर्विष्णादीनि युगानि द्वादश तत्रै-वाभिहितानि ।

संवत्सराख्यवर्षेषु नित्यमाज्ञायुता भवेत् ।
परिपूर्वे तु भूतघ्नी लोकख्याता तथैव च ॥
इदापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धन-धान्यवती भवेत् ॥
इत्पूर्वे नाशमाप्नोति कर्त्तुर्नाशवहा भवेत् ।
तत्रापि शम्भोर्नृत्यस्य समये रोचिता भवेत् ॥

प्रभवाद्यः पञ्च क्रमेण संवत्सर-परिवत्सरेदावत्सरानुवत्सरेद्वत्सर-संज्ञकाः एवमङ्गिरादिपञ्चकस्य क्रमेण संज्ञापञ्चकमेवमुत्तरत्रापीति तत्रैवाभिहितं ।

मत्स्यपुराणे ।

प्राप्य शुक्लं शुभं पक्षमतीते चोत्तरायणे ।

विष्णुधर्मोत्तरे ।

उत्तरे त्वयने सौम्या धनवृद्धिकरी भवेत् ।
तत्रापि सुप्ते देवेशे सर्व्वानर्थविवर्द्धिनी ॥
शिशिरे लोककान्ता सा दृढा च वसुधाधिप ।
स्फीता वसन्ते सौम्या च वरदा च तथा भवेत् ॥
ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्रावृट्काले तथा नाशं कर्त्ता सह समाप्नुयात् ॥

प्रावृट्कालनिषेधस्य शिवप्रतिष्ठाव्यतिरिक्तविषयः, शिवप्रतिष्ठायां तद्विधेः शिवप्रतिष्ठाकालनिर्णये दर्शितत्वात् ।

शरत्काले कृता नाशं शीघ्रमेव प्रपद्यते ।
हेमन्ते च सदा सौम्या धर्मवृद्धिकरी भवेत् ॥

माघे कर्त्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
लोकानन्दकरी चैत्रे वैशाखे वरसंयुता ॥
आशायुता सदा ज्यैष्ठे आषाढ़े धर्मवृद्धिदा ।
श्रावणे धनहीना स्यात् प्रौष्ठपादे विनश्यति ॥
आश्विने नाशमाप्नोति वह्निना कार्त्तिके तथा ।
सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥
दोषावहा तु माघे स्यात् कर्त्तुरात्मन एव च ।
चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

अथ माघमासनिषेधो विष्णुप्रतिष्ठाविषयः, विधिस्तु तद्व्यतिरिक्तदेवताप्रतिष्ठाविषयः, मार्गशीर्षमासविधिश्च विष्णुप्रतिष्ठाव्यतिरिक्तविषयः मार्गशीर्षमासनिषेधस्य विष्णुप्रतिष्ठाकालनिर्णये दर्शितत्वात् । श्रावणाश्विनमासनिषेधश्च विष्णुप्रतिष्ठाव्यतिरिक्तविषयः विष्णुप्रतिष्ठायामेतद्द्वयविधेस्तत्रैव दर्शितत्वात् ।

अपरे त्वाहुः "माघमासे सर्वदेवानामितिवचनात् विष्णुप्रतिष्ठापि तत्र कार्य्या माघमासादिनिषेधस्तु तत्तद्ग्रन्थविषयतत्तत्प्रतिष्ठाविषयविशेषे ।

द्वितीये मध्यफलदा तृतीये च शुभप्रदा ।
धन-धान्यवती स्फीता वरदा च तथा भवेत् ।
यस्य पक्षस्य वृद्धिः स्यात् तस्मिन् शुभफलप्रदा[१] ॥
द्वितीयायां धनोपेता तृतीयायां वरप्रदा ।

(१) शुभफला भवेदिति ख० ।

चतुर्थ्यां नाशमाप्नोति यमस्य स्यात्सुखावहा ॥
विनायकस्य देवस्य तथा तत्र हितप्रदा ।
पञ्चम्यां श्रीयुता कर्त्तुर्वरदा च तथा भवेत् ॥
षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ।
अष्टम्यां धान्यवत्कला नवम्यां तु विनश्यति ॥
भद्रकाल्याः कृता तत्र कर्त्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा कृता ॥
एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥
कृष्णपक्षे पञ्चदश्यां कर्त्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥
वृद्धत्स्पृशा च विज्ञेया तथा दोषवती नृप ।
दिग्न्तरीक्षे भूमौ च उत्पातेन तु या युता ॥
कर्त्तुर्व्याधिप्रदा तत्र प्रतिष्ठा तु क्रिया भवेत् ।
तिथिहानौ क्षयोज्ञेयो वृद्धौ वृद्धिः प्रकीर्त्तिता ॥

मत्स्यपुराणे ।

पञ्चमी च द्वितीया च तृतीया चाष्टमी तथा ।
दशमी पौर्णमासी च कृता तु फलदा भवेत् ॥

लक्षणसमुच्चये ।

तासु पक्षे सिते कार्य्या द्वितीया वै तिथिष्वथ ।
द्वितीयायुर्मतिं दद्यात्तृतीया पुत्रसम्पदम् ॥
पञ्चमी च श्रियं नित्यं सप्तमी रोगनाशनम् ।

दशमी भूमिवृद्धिश्च सौभाग्यञ्च त्रयोदशी ॥
नानाविधं धनं नूनं पौर्णमासी तिथिः सदा।
एकविंशकरैर्नन्दा भद्रा पञ्चर्षिभानुभिः ॥
जया हि रामाद्विकामैः रिक्ता वेद-ग्रहेन्द्रियैः।
वाण-दिक्तिथिभिः पूर्णा हीनतुल्या हिता क्रमात् ॥
एते शुक्लेऽनुलोमाः स्युर्व्वंकृष्णे च विलोमतः।
वृहस्पतिर्द्दयं चायुर्बुधोजय-धनानि च ॥
सर्व्वं ह्यर्कः शुभः शुक्रश्चन्द्रः शान्तिप्ररोहणे।
कर्कोवृषतुलाचापकुम्भसिंहाश्वमयुग्मके ॥
मत्स्ये घटालिमेषस्था निद्दिशानां प्रधानता।
षडष्टचतुरायामाचतूराशिक्रमेण तु॥

विष्णुधर्म्मोत्तरे।

तेजस्विनी सूर्य्यदिने चन्द्रे चेमावहा भवेत्।
भौमेऽग्निना प्रदह्येत बुधेन धनदा भवेत् ॥
गुरुणि स्यादृष्टदे नित्यं लोकानन्दकरी सिते।
आचन्द्रार्कस्थिता सौरे प्रतिष्ठा समुदाहृता ॥

मत्स्यपुराणे।

बुधोवृहस्पतिः शुक्रस्त्रयोवाराः शुभावहाः।
एभिर्निरीक्षितं लग्नं नक्षत्रञ्च प्रशस्यते ॥

समुच्चयलक्षणे।

प्रीतिः सौभाग्यमायुष्मान्सुकर्मा शोभनो धृतिः।
वृद्धिः सिद्धिः शुभः साध्योवरीयाञ्छिव-शुक्लकौ।

ब्रह्मेन्द्रौ च शिवं चेति योगाः तत्संज्ञकाः शुभाः ॥
ववश्च बालवश्चैव कौलवं तैतिलं तथा ।
गरश्च वणिजश्चैव शकुनिश्च चतुष्पदं ।
नागं किन्तुघ्नमप्याहु विष्टिहीनन्तु पञ्चयोः ॥

विष्णुधर्मोत्तरे ।

शकुनौ दोषजननी चतुष्पदे भयावहा ।
नागे भवति सौम्या च किन्तुघ्ने च शुभप्रदा ॥
कौलवे वरदा ज्ञेया तैतिले रोगनाशिनी ।
गराख्ये रोगजननी तथा वणिजि पुष्टिदा ।
विष्टौ मरणदा कर्तुरात्मदोषवती तथा ॥

मात्स्ये ।

आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठा-श्रवण-रोहिण्यः पूर्वाभाद्रपदा तथा ॥
हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥

लक्षणसमुच्चये ।

पुष्ययुक्रोहिणीकालस्था प्रगाढोत्तरा द्विजे ।
पुनर्वस्वनुराधास्तु चित्रा ज्येष्ठा महीभुजि ॥
धनिष्ठा श्रवणौ विश्ये युगे भाद्रपदे तथा ।
अश्विनी रेवती भद्रे स्वाति-फाल्गुनिकाद्वयम् ॥
चतुर्वर्णमघा स्त्रीदा मूलार्द्रा भरणी मघा ।
एतानि प्रतिलोमानां चलार्ध्वान्यत्यजे तथा ॥

अथ-रोगकरास्तिस्रो रोहिणी भयवृद्धिदा ।
हस्तः सिद्धिप्रदोलिङ्ग आयुर्दाषाढ़युग्मके ॥
पुनर्वसुः सुखं दद्यादनुराधा तु सम्पदः ।
चित्रा त्वर्थसुखं नित्यं ज्येष्ठा रोगविनाशकृत् ॥
धनिष्ठारिजयं दद्यात् ज्ञानदः श्रवणः सदा ।
युग्मभाद्रपदा वृद्धिर्वक्तमित्राणि चाश्विनी ॥
रेवती पुष्टिदा नित्यं स्वाती कुर्य्याद्धनं बहु ।
फाल्गुनीद्वितयं वृद्धिर्भरणी रिपुभेदनम् ॥
आर्द्रा सौभाग्यसम्पत्तिर्मूलेऽथ नृपसत्क्रिया ।
मृगः शान्तिप्रदोनित्यं धन्या शतभिषं त्यजेत् ।
अश्लेषा कृत्तिका चैव विशाखा च शुभप्रदा ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी कृत्तिका च भूतनिग्रहकारिणी ।
किञ्चिद्भूला ततः काले न तदन्वितवह्निना ॥
वह्नेः सूर्य्यस्य सोमस्य कुमारस्य च सा वरा ।
गङ्गाद्याय कृतास्तच न दह्यन्ति च वह्निना ॥
प्राजापत्ये गृही नित्यं लोकानुग्रहकारिणी ।
सौम्ये तु वरदा प्रोक्ता मूषकैस्तु विनश्यति ॥
आर्द्रायां कर्त्तमरणं चिप्रमेव प्रयच्छति ।
पुनर्वसौ विनाशस्य संस्कारस्ताप्नुयात्पुनः ॥
पुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा ।
सापि कर्त्तविनाशाय नागानां नाशकृद्भवेत् ॥

पित्रोर्मरणदा कर्तुस्तथा नाशञ्च गच्छति ।
शोकगम्या भवेद्भाग्ये कर्तुर्नाशवहा तथा ॥
तत्रापि कामदेवस्य कर्तुः सौख्यवहा तथा ।
अर्यम्णे सुदृशा स्फीता लोकानुग्रहकारिणी ॥
आयुर्दा च कृता हस्ते चित्रायां नाशमाप्नुयात् ।
नित्यैश्वर्य्ययुता लोके चित्रायाञ्च हितप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ।
ऐन्द्राग्ने कर्त्तृनाशाय मैत्रे मित्रविवृद्धये ॥
ज्येष्ठायां तेजसा युक्ता धन-धान्यवती भवेत् ।
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥
आद्ये क्लेदमवाप्नोति वैश्वदेवे सुखप्रदा ।
श्रवणे धन-धान्याढ्या वासवे वसुसंयुता ॥
वारुणे शीघ्रनाशाय तथाप्ये मनुजोत्तम ।
अहिर्बुध्ने दृढा स्फीता कर्तुः सौख्यप्रदायिनी ॥
धन-धान्ययुता पौष्णे आश्विने योगनाशिनी ।
याम्ये मरणदा कर्तुरात्मनाशकरी तथा ॥
सार्के स्याच्छोकजननी ससौरे मृत्युदायिनी ।
सभौमे वह्निभयदा सतमस्के स्थिरा न तु ॥
केतुना धूमिते ऋचे वह्निदाहमवाप्नुयात् ।
केतूदये भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥
भौमोदये भवेद्येन तेन दह्येत वह्निना ।
सौरोदये भवेद्येन तेन कर्त्ता विनश्यति ॥

नक्षत्रे सपरीवेषे परचक्रभयं भवेत् ।
उल्काहते विनाशाय सभूकम्पभयप्रदा ॥
उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत् ।
त्रिविधोत्पातयुक्ते भे न शुभा परिकीर्त्तिता ॥
दिव्यकीर्त्तिविनाशाय भौमे चात्मविनाशिनी ।
अन्तरीक्षे च विज्ञेया लोकनाशकरी तथा ॥
सवैधृत-व्यतीपातमृक्षमेकं विवर्जयेत् ।
शेषैर्दोषैस्तथायुक्ता यावदागमनाद्रवेः ॥
जन्मनक्षत्रविहिता कर्त्तुः श्रेयस्करी भवेत् ।
सम्पत्करी द्वितीये स्यात्तृतीयेऽरिभयप्रदा ॥
क्षेम्या चतुर्थे भवति पञ्चमे व्याधिवर्द्धिनी ।
कार्य्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा ॥
अष्टमे वरदा सौम्या नवमे श्रीविवर्द्धिनी ।
कर्म्मणां साधिका प्रोक्ता जन्माद्दे दशमे शुभा ॥
एकादशे शुभकरी द्वादशेऽरिभयप्रदा ।
ज्ञेया त्रयोदशे क्षेम्या रोगदा च चतुर्दशे ॥
वृद्धिदा पञ्चदशके षोडशे निधनप्रदा ।
सप्तदशे भूतिकरी नन्दा[१] चाष्टादशे भवेत् ॥
एकोनविंशतितमे कर्त्तुर्मरणदायिनी ।
तथा द्वितीये धनदा तृतीयेऽरिभयप्रदा ॥
चतुर्थे क्षेमजननी पञ्चमे रोगवर्द्धिनी ।

(१) नन्दयतीति नन्दा सुखदेति यावत् ।

षष्ठे लक्ष्मीकरी ज्ञेया धन-धान्यविवर्द्धिनी ॥
द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ।
द्वादशे नवमे चन्द्रे कर्त्तुर्दोषवती भवेत् ॥
जन्मस्थश्च तृतीयश्च षष्ठश्चैकादशस्तथा ।
दशमः सप्तमश्चैव यदा विद्धो भवेद्ग्रहैः ॥
पञ्चमैर्नवमैश्चैव द्वादशैर्वा तथाष्टमैः ।
चतुर्थे वा तृतीये वा क्रमात्पापात्फलं लभेत् ॥
विपर्य्ययेण वेधश्चेत्पापोऽपि शुभकल्पितः ।
चन्द्राद्द्वादशके सूर्य्ये द्वितीये वा भयप्रदा ॥
द्वादशे वा द्वितीये वा भौमे दाहमवाप्नुयात् ।
द्वादशे वा द्वितीये वा शौरे मरणदा भवेत् ॥
पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ।
एकस्मिंस्तु यदा केन्द्रे चन्द्रमाश्च व्यवस्थितः ॥
केन्द्रत्रयमथान्यस्थायुक्तं सूर्य्यारसूर्य्यजैः ।
तदा कर्त्तुर्विनाशाय प्रतिष्ठा स्याच्चराधिप ॥
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ।
सशौरे मृत्युदा ज्ञेया सरादौ निधनप्रदा ॥
नक्षत्रे सोपरागे तु कर्त्तुर्मरणदायिनी ।
परित्यष्टे[१] तथा चन्द्रे तथा ज्येष्ठान्त्यपादगे ।
पौष्णान्त्यपादगे चैव कर्त्तुर्निधनकारिणी ॥

---

(१) पाठोऽयं आदर्शानुरूप एव सन्निवेशितः परन्त्वयं न समीचीनो विभाति, परिपुष्टे इत्ययं पाठो भवितुमर्हति ।

लक्षणसमुच्चये।

गुरुर्जीवो नव-द्वीषु-सप्तस्थानेषु सर्वदा।
बुधः षष्ठाष्ट-तुर्य्येषु दिक्सप्त-नवराशितः॥
सप्त-त्रि-षष्ठ दशमः शशी शुभफलप्रदः।
रविर्दश-त्रिषट्संस्थो राहुस्त्रि-दशमङ्गतः॥
त्रि-षट्स्थानगताः शस्ता मन्दाङ्गारक-केतवः।
शुभाः क्रूराः सपापाश्च सर्वे एकादशास्तथा॥
एषां दृष्टिर्मुनौ पूर्णा वार्द्धिकी ग्रह-भूतयोः।
पादिकी रामदिक्स्थाने वस्वब्ध्योः पादवर्जिता॥
द्वितीया सापदाख्या तु चतुर्थी क्षेमसंज्ञका।
षष्ठी च साधिका तारा ह्यष्टमी शत्रुनाशिका।
नवमी चातिमित्रा स्यादेताः पञ्च फलप्रदाः॥

विष्णुधर्मोत्तरे।

जन्मराश्युदयेकर्त्तुः क्षिप्रं नाशकरी भवेत्।
द्वितीये धननाशाय तृतीये कर्त्तृवृद्धिदा॥
चतुर्थे गृहनाशाय पञ्चमे व्याधिदा भवेत्।
षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी॥
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी।
दशमे कर्मणां वृद्धौ लाभे लाभकरी भवेत्॥
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा तु तथा कृता।
जन्मलग्नोदये श्रेष्ठा धन-धान्यवती भवेत्॥
जन्मराशिफलं शेषं सर्वस्थानेषु निर्दिशेत्।

मेषोदये कृता चिप्रं नाशमाप्नोति पार्थिव ॥
वृषोदये स्थिरा प्रोक्ता धन-धान्यवती भवेत् ।
लोककान्ता च मिथुने बहुकल्याणकारिणी ॥
कुलीरे चिप्रं नाशः स्यात् सिंहे च सुदृढा भवेत् ।
कन्यायां लोककान्ता स्यात्तुलायां भवति स्थिरा ॥
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ।
मकरे चिप्रं नाशः स्यात् कुम्भे लग्ने दृढा भवेत् ॥
मीने गुणवहा कर्त्तुः कल्ये[१] शून्या तथा भवेत् ।
उग्रा स्यात् सूर्यदाभायां[२] सौम्या सौम्यस्य कीर्त्तिता ॥
पापग्रहस्य केन्द्रेण कर्त्तुर्नाशाय कीर्त्तिता ।
सौम्या पटस्य सुशुभं कर्त्तुर्भवति वृद्धिदा ॥
फलं यदेव लग्नेषु नवांशेषु तदेव तु ।
द्वादशांशेषु विज्ञेयं तदेव मनुजोत्तम ॥
कर्त्तुर्नाशाय विज्ञेया त्रिंशांशे सोम-सूर्ययोः ।
शतं जीवेत् प्रपौत्राणां[३] कर्त्तुः कल्याणदा भवेत् ॥
शुभमंशं महाराज लग्नं पापफले शुभं ।
लग्ने शुभतरे प्राप्ते पापमंशमशोधनं ॥
लग्नस्थे शोकदा कर्त्तुः कृता भवति भास्करे ।

---

(१) लग्नविशेषे इत्यर्थः ।
(२) सूर्यदाभायामित्ययं पाठः सादर्शपुस्तकेष्वेकरूप एव वर्त्तते परन्त्वयं न समीचीनो विभाति ।
(३) प्रपौत्राणां शतं जीवेदित्यन्वयः ।

द्वितीयेऽर्थस्य हानिः स्यात् तृतीये धनसंयुता ॥
आयुःक्षयस्तुर्थे स्यात् पञ्चमे सुतनाशनं ।
षष्ठे शत्रुविघातस्तु दारिद्र्यं सप्तमे भवेत् ॥
मरणं चाष्टमे भानौ नवमे धर्मपीड़नं ।
दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥
द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ।
चन्द्रे लग्नगते ज्ञेया सुदृढा मनुजोत्तम ॥
धनान्विता द्वितीये तु तृतीये लाभसंयुता ।
चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ॥
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ।
अष्टमे मरणायोक्ता नवमे धर्मपीडनं ॥
दशमे धर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ।
व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥
अर्द्धबिम्बाधिके चन्द्रे शुभपक्षफलं भवेत् ।
अर्द्धबिम्बाधिके क्षीणे क्रमादथ निबोध मे ॥
चन्द्रे लग्नगते ज्ञेया क्षिप्रं नाशो महीभुजां ।
द्वितीये च दरिद्रा स्यात् तृतीये धनसंयुता ॥
बहुधान्यं चतुर्थे स्यात् पुत्रनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥
अष्टमे मरणायोक्ता नवमे धर्मघातिनी ।
धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥
व्यये व्ययवती नित्यं दरिद्रा च तथा भवेत् ।

षष्ठे पूज्या तथा शुक्रे सप्तमे धनवृद्धिदा ।
अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा[१] ॥
दशमे लोककान्ता स्यादरिनाशस्तथायगे ।
तथा व्ययस्थे विज्ञेया सद्व्यये सधना तथा ॥
मृत्युदा लग्नगे सौरे दरिद्रा स्याद्द्वितीयगे ।
तृतीये धनलाभाय चतुर्थे कर्ममृत्युदा ॥
सुतगे सुतनाशः स्यादरिनाशस्तथारिगे ।
जायानाशस्तु जायास्थे मृत्युर्मृत्युग्रहोपगे ॥
धर्मगे धर्महानिः स्यात् कर्महानिस्तु कर्मगे ।
महालाभस्तु लाभस्थे व्ययगे च व्ययो भवेत् ॥
शून्यं विवर्जयेत् केन्द्रे तत्तचैव नियोजयेत् ।
एवं ज्ञात्वा शुभं कालं प्रयत्नेन सुदैववित् ।
कुर्यात् प्रतिष्ठां यत्नेन गृह्णीयादवधानतः ॥
शुभेऽह्नि पूर्वं यचक्षां तत्कालप्रतिमाञ्च यां ।
समाष्टपीठिकां गर्त्ते स्थापितां विनिवेशयेत् ।
तत्कालमेवं कुर्वीत नामावास्यां समाहितः ॥

लक्षणसमुच्चये ।

पादादूनचतुर्नाडीभागः स्यान्मीन-मेषयोः ।
वृष-कुम्भौ च भुञ्जानौ चतस्रः पादवर्जिताः ॥
मकरे मिथुने चैव चापालि-हरि-कर्कटाः ।

---

(१) सुखप्रदेति ख० ।

पादोनाः षट्तुलाः कन्ये घटिकाः सार्द्धपञ्च तु ॥
केसरी च वृषः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरं धनुस्तुला-मेषाद्वयुग्मं मीन-कन्यके ।
कर्कटे कर्कटालिश्च प्रवर्ज्याः कार्यनाशकाः ॥
स्थिरः शुभग्रहैर्दृष्टः शस्तोलग्नः शुभाश्रितः ।
गुरु-शुक्र-बुधैर्युक्ते लग्ने दद्याद्धनायुषी ॥
राज्यं सौख्यं बलं पुंसां देशधर्मादिकं बहु ।
प्रथमः सप्तमस्तुर्यो दशमः केन्द्र उच्यते ।
गुरु-शुक्र-बुधास्तत्र सर्वसिद्धिप्रदायकाः ॥
त्र्येकादश-चतुर्थस्था लग्नात् पापाः शुभग्रहाः ।
अतोऽन्येऽनिष्टकर्मार्थे योज्यास्तिथ्यादयो बुधैः ॥
सुयोगे शाश्वता धर्माः स्थिरायां पुष्टि-जीवितं ।
सुलग्ने च महाभागो विषुवे चेप्सितं फलं ॥
षडशीतिमुखे पुण्ये अयने च महातिथौ ।
ऋद्धिरारोग्यमैश्वर्यं देवस्थापनतो भवेत् ॥
सन्ध्यागते तु लग्ने च प्रत्यस्तमितदुर्ग्रहे ।
दुष्टग्रहे दुष्टलग्ने नक्षत्रेऽशुभसंयुते ॥
दुर्निमित्ते तथोत्पाते चन्द्र-सूर्योपमर्दने ।
एतेषु स्थापिता देवाः क्षय-दुर्भिक्ष-रोगदाः ।
तस्माद्दिनं निरीक्ष्यादौ सर्वोपस्करमाहरेत् ॥

मत्स्यपुराणे ।

ग्रह-ताराबलं बुद्ध्वा ग्रहपूजां विधाय च ।

लग्ने मृत्युकरा भौमे तथा दारिद्र्यदा धने ॥
कीर्त्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥
अरिनाशस्तथा षष्ठे सप्तमेऽग्नौ विनश्यति ।
अष्टमे कर्त्तमरणं नवमे दशनच्युतिः ॥
दशमे कर्मसिद्धिः स्यात् लाभे लाभवती भवेत् ।
जायात्मजप्रभृतयो व्यये स्युर्व्ययदाः सदा ॥
बुधलग्ने धनयुता द्वितीये च तथा भवेत् ।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥
कीर्त्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ।
सुखदा सप्तमे ज्ञेया हर्षदा च तथाष्टमे ॥
सौख्यदा नवमे राजन् दशमे कर्मवृद्धिदा ।
स्थिरलाभगते ज्ञेया व्ययगे धनसंयुता ॥
जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ।
दृढासदा तृतीये स्यात् चतुर्थे धनसंयुता ॥
पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी ।
सप्तमे राज्यदा कर्त्तुरष्टमे च समृद्धिदा ॥
कीर्त्तिदा नवमे ज्ञेया दशमेऽन्नसमृद्धिदा ।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥
लग्नस्थे निश्चला शुक्रे सर्वकामप्रदा भवेत् ।
धनगे च धनं दद्यात् तृतीये भ्रातृवर्द्धिनी ॥
चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ।

निमित्तं शकुनं लब्ध्वा वर्जयित्वा क्षुधादिकं ॥
शुभकाले शुभस्थाने क्रूरग्रहविवर्जिते ।
लग्ने ऋचे च कुर्वीत प्रतिष्ठादिकमुत्तमं ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्थापनं कुर्याद्विधिदृष्टेन कर्मणा ॥

विष्णुधर्मोत्तरे ।

यस्मिन् ऋचे यदेवोक्तं फलं भूपतिसत्तम ।
तदेवेह फलं प्रोक्तं तन्मुहूर्त्तेऽपि यादव ॥
रौद्रः सार्पस्तथा मैत्रः पैत्रोवासव एव च ।
आप्यो वैश्वस्तथा ब्राह्मः केश्वरः शक्रदेवतः ॥
ऐन्द्राग्नेयोनैर्ऋतश्च वारुणश्च महीपते ।
अर्यम्णश्च तथाभाग्यो मुहूर्त्तास्तु दिवाकरः ॥
रौद्रोऽजपादहिर्बुध्नः पौष्ण आश्विन एव च ।
याम्योऽग्निदेवतश्चैव ब्राह्मः सौम्यस्तथैव च ॥
आदित्यो जीवदैवत्यो वैष्णवः सूर्यदेवतः ।
त्वाष्ट्रश्चैवाथ याम्यश्च मुहूर्त्ता रात्रिचारिणः ॥

तथा ।

दिनमध्यङ्गते सूर्य्ये मुहूर्त्तेऽभिजिदृष्टमे ।
सर्वकामसमृद्धः स्यात् सर्वोपद्रववर्जितः ॥

मत्स्यपुराणे ।

प्राजापत्ये तु शयनं ब्राह्मे चोत्थापनं भवेत् ।
मुहूर्त्ते स्थापनं कुर्यात् तेन ब्राह्मे विचक्षणः ॥

विष्णुधर्मोत्तरे ।

गुरावस्तमयं प्राप्ते नीचस्थे कर्त्तृघातिनी ।
तस्मादुच्चस्थे जीवे तु धन-धान्यकरी भवेत् ॥
ब्राह्मे रौद्रे दृढा ज्ञेया प्राजापत्ये सुखावहा ।
स्वर्गलोकप्रदा स्वर्गे चक्रे चक्रप्रवर्त्तिनी ॥
वानस्पत्ये तु वरदा आन्ध्ये चान्यर्विवर्द्धिनी ।
वायौ भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥
आग्नेये दाहमाप्नोति क्लीवमब्दैवते तथा ।
सौरे भवति सुक्षीणा चान्द्रे च वरदा तथा ॥
नश्यते साध्यदैवत्ये गोदैवे वृद्धिमाप्नुयात् ।
चैत्रे च पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥
कौमारे वृद्धिमाप्नोति पित्र्ये नाशं तथैव च ।
वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥
चपला वनदैवत्ये याम्ये मृत्युप्रदा भवेत् ।
वाग्दैवत्ये सदा वाग्मी श्रीगे च श्रीयुतो भवेत् ॥
धनगे धनसंयुक्तः सुदृढः शैलदैवते ॥
पृथ्वीदैवे दृढा सौम्या शुभा स्याद्वेददैवते ।
पौरुषे च तथा रोषे वक्रधर्मविवर्द्धिनी ।
कर्त्तुः सुखावहा चैव तथा लाङ्गयुता भवेत् ॥

इति सामान्यप्रतिष्ठा ।

---

## अथ शिवप्रतिष्ठा।

अथ लक्षणसमुच्चये।

उत्तरायणगते भानौ लिङ्गस्थापनमुत्तमं।
दक्षिणे त्वयने पूर्व्वं चिवर्षादि भयावहं॥
सग्रहं स्थापनं नेष्टं तथा वै दक्षिणायने।
सग्रहे स्थापिते लिङ्गे व्याधिना पीड्यते प्रजा॥
कुमाराः सम्प्रपीड्यन्ते कन्यानाशश्च जायते।
सुमहाशस्त्रलोपश्च तदा राज्ञां प्रजायते॥
कर्त्तुः क्षयः सदा शोको गृहे भवति दारुणः।
तस्मान्न स्थापयेद्देवं सग्रहे दक्षिणायने॥
स्थापनन्तु प्रकर्त्तव्यं शिशिरादावृतुत्रये।
प्रावृषि स्थापितं सिद्धौ भवेदरदयोगदं॥
हेमन्ते ज्ञानदं लिङ्गं शिशिरे सर्व्वभूतिदं।
लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जय-शान्तिदं।
यतीनां सर्व्वकाले च लिङ्गस्यारोपणं मतं॥

रत्नावल्यां।

माघ-फाल्गुन-वैशाख-ज्यैष्ठाषाढेषु पञ्चसु।
मासेषु शुक्लपक्षेषु सुदुष्टग्रहवर्जिते॥
द्वितीया पञ्चमी षष्ठी सप्तमी नवमी तथा।
द्वादश्येकादशी ग्राह्या पूर्णिमा च त्रयोदशी॥
गुरुः शुक्रो बुधः सोमोवरयेत्तु सुखावहं।

आर्द्रा शतभिषा स्वाती रोहिणी श्रवणं वृषः ॥
पूर्वाषाढोत्तराषाढा ज्येष्ठाश्लेषा च रेवती ।
चित्रा-हस्तौ धनिष्ठा स्यादनुराधा च सिद्धिदा ॥

लक्षणसमुच्चये ।

नक्षत्रे यत्र तत्रापि सर्वकालं द्विपक्षयोः ।
लिङ्गस्य स्थापनं शस्तं यतेः कामार्थिनो ध्रुवं ॥

रत्नावल्यां ।

सौभाग्यः शोभनायुष्मान् सिद्धः साध्यः शिवः शुभः ।
वृद्धिः प्रीतिर्धृतिः सिद्धिः ध्रुवः शुक्रः सुशोभनम् ॥
ववश्च बालवश्चैव कौलवस्तैतिलं शुभम् ।
मैत्रं परममैत्रश्च सम्पद्देमं यथा शुभम् ॥
लग्नश्च वृश्चिकः सिंहो मेषोमिथुन-कर्कटौ ।
तथा कन्या तुला-कुम्भौ वृषभश्च प्रशस्यते ॥
रविहस्ते भवेत्सिद्धिः सोमे मृगशिरस्तथा ।
कृत्तिका भौमवारे स्यादनुराधा बुधे यदा ॥
रेवती भृगुसम्पन्ना शुक्रवारे पुनर्वसुः ।
श्रवणं शनिवारे च सिद्धियोगाः शुभा मताः ॥
जन्मभप्रभृतयोऽथ षट्सप्तैकादशाः शुभाः ।
भौम-मन्दौ वृषस्थौ च द्वि-सप्ताङ्क-शरैर्गुरुः ॥
जन्म-तुर्य-रसाष्टस्थो दशमस्थश्च शुभो बुधः ।
रस-सप्त-दशान्यस्थः शुक्रश्चाथ प्रयत्नतः ॥
चेत्रमध्ये ग्रहाः सर्वे यमकण्ठेति निश्चिताः ।

यस्मात्ते सर्वकार्य्यघ्नास्तस्मात्तेष्वनियोजयेत् ॥
क्षीणचन्द्रस्तथा मन्दः(१) कुजार्कौ तैर्युतो बुधः ।
पापाः पापाश्रया यस्मात्तस्मात्तांश्च विवर्जयेत् ॥
केन्द्रस्थे च गुरौ शुक्रे न लग्नेन्दोर्यदा ग्रहाः ।
नष्टचन्द्रे तथा शुक्रे गुरावस्तं गते सति ।
प्रतिष्ठादिशुभारम्भान् दूरयात्रां विवर्जयेत् ॥
अन्यद्गुह्यतरं यत्तत् ज्योतिःशास्त्रविशारदः ।
समालोक्य नियुञ्जीत सर्वसाध्यान्यथाचरेत् ॥

लक्षणसमुच्चये ।

सुदिने शुक्लपक्षे च रविवारर्क्षभूषिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
द्वैते दैवे प्रतिष्ठा स्यान्मिश्रे च सितपक्षके ।
अद्वैते चैव कृष्णेऽपि मन्त्र-मूर्त्तिप्रभेदतः ॥
द्वैता सिद्धान्तिकी रौद्री शतं वर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ॥
अद्वैता भैरवी सा तु वाम-दक्षिणमन्त्रजा ।
शतार्द्धार्द्धन्तु सा तिष्ठेत् बाणलिङ्गस्वयम्भुवा ॥

इति शिवप्रतिष्ठा ।

---

(१) निन्द्य इति क० ।

## अथ विष्णुप्रतिष्ठा ।

वैखानससंहितायां ।

अयने चोत्तरे कुर्याद्दक्षिणे वा त्वरान्वितम् ।

देवीपुराणे वैखानससंहितायां ।

मार्गशीर्षक-माघौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
मासेषु फाल्गुनः श्रेष्ठः चैत्रो वैशाख एव च ।
तैषेऽचाप्ययुक्मासे श्रावणे मासि वा भवेत् ॥

तत्त्वसारसंहितायां ।

प्रतिष्ठाचर्षिभिः प्रोक्ता या क्रमादुच्यतेऽथ सा ।
प्रतिपच्च द्वितीया च नवमी च त्रयोदशी ।
दशमी द्वादशी पूर्णा शुक्लपक्षे शुभान्विता ॥

महापञ्चरात्रे ।

पौर्णमास्यां त्रयोदश्यां द्वादश्यां शुक्लपक्षतः ।
प्रतिपद्द्वितीययोर्वा पञ्चम्यां दशम्यामपि ।
संस्थितास्तिथयश्चैता ऋक्षयोगं शृणुष्व मे ॥

वैखानससंहितायां ।

श्रवणे चैव रोहिण्यां स्वात्यां हस्ते पुनर्वसौ ।
त्रिपूत्तरेषु रेवत्यां श्रविष्ठे वारुणे तथा ॥
सौम्य-त्वाष्ट्रानुराधासु तिष्ये चैव विशेषतः ।
अन्यस्मिन् सुप्रशस्ते वा यथोक्तगुणसंयुते ॥
अश्विनी-रोहिणीयोगे पुनर्वसौ च पुष्यतः ।

भरण्यां श्रवणे हस्ते रेवत्यामुत्तरासु च ।
त्रिषु नक्षत्रयोगेषु क्रमेणैवूत्तरायणे ॥

सागरसंहितायां ।

सोमो वृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ।
एते सौम्या ग्रहाः प्रोक्ताः प्रतिष्ठा-योगकर्मणि ॥

'ग्रहाः' वाराः । 'सौम्याः' अनुकूलाः ।

महापञ्चरात्रे ।

सौम्यग्रहे प्रशस्तदिने सोम-भार्गववासरे ।
ग्रहयोग एवं भवेत्प्रतिष्ठा-यज्ञकर्मणि ॥

वैखानससंहितायां नृसिंहपुराणे ।

पूर्वपक्षे शुभे काले स्थिरे चोर्द्ध्वमुखेऽपि भे ।
अनुकूले च लग्ने च हरिः स्थाप्योनरैस्तथा ॥
नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते ।
गुरु-शुक्र-बुधेन्दूनां एकवारयुते शुभे ॥
ग्रामस्य यजमानस्याप्यनुकूलेऽपि तत्र वै ।
चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च ।
सुप्रशस्ते मुहूर्त्ते वै प्रतिष्ठां कारयेद्धरेः ॥

लक्षणसमुच्चये ।

सुदिने सितपक्षे च सुरवारर्क्षभूषिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
दैते दैवे प्रतिष्ठा स्यान्मिश्रे च सितपक्षके ।
अदैते चैव कृष्णे च मन्त्र-मूर्त्तिप्रभेदतः ॥

द्वैता सिद्धाग्निको रौद्री शतवर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ।
अद्वैता भैरवी सा तु वाम-दक्षिणमन्त्रजा ॥

मधूककाष्ठप्रतिमाप्रतिष्ठाकृत्यं वाराहपुराणे ।

शुक्लपक्षे तु द्वादश्यां नक्षत्रे रैवते तथा ।
तत्र संस्थापनं कुर्य्याद्भूमिसिद्धार्थसाधनं ॥

इति विष्णुप्रतिष्ठाकालनिर्णयः ।

---

## अथ देवीप्रतिष्ठाकालः ।

देवीपुराणे ।

गुरौ मेषगते शुक्रे देवीस्थाय प्रतिष्ठपेत् ।
इहैव स भवेद्धन्यो मृतोगच्छेत्परम्पदम् ॥
तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता ।
तथा माघाश्विनौ मासावुत्तमौ परिकीर्त्तितौ ॥
देवी तत्र सदा शक्र-पांशुजापि प्रतिष्ठिता ।
भवते फलदा पुंसां कर्कस्थे च वृषस्थिते ॥
तथाच सिद्ध-गन्धर्वा नृपा वा राज्यकाङ्क्षिणः ।
ते यजन्तु सदा देवीं स्थापयित्वा विधानतः ॥
न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ।
मातृ-भैरव-वाराह-नरसिंह-त्रिविक्रमाः ।

महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने ॥

तथाच चतुःषष्टिप्रतिष्ठायाम् ।

ब्रह्मोवाच ।

स्थापनञ्च प्रवक्ष्यामि सर्वकामप्रसाधकम् ।
सर्वकालं प्रकर्त्तव्यं कृष्णपक्षे विशेषतः ॥
रात्रिरूपा यतो देवी दिवारूपो महेश्वरः ।
अतः स्वकालपूजाभिः सिद्धिदा परमेश्वरी ॥

इति देवीप्रतिष्ठाकालनिर्णयः ।

---

## अथ वापी-कूपादिप्रतिष्ठाकालः ।

वह्निपुराणे ।

वापी-कूप-तडागानां तस्मिन् काले विधिः स्मृतः ।
सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥
कर्कटे पुत्त्रलाभस्तु सौख्यं तु मकरे भवेत् ।
मीने यशोऽर्थलाभस्तु कुम्भे च सुबहूदकम् ॥
वृषे च मिथुने वृद्धिर्वृश्चिके लक्षणं भवेत् ।
पिच्छलत्विस्तु कन्यायां तुलायां शाश्वती गतिः ।
सिंहे मेषे धननाशं लक्ष्मीश्च द्विज यच्छति ॥

भविष्योत्तरपुराणे ।

तस्मिन् सलिलसम्पूर्णे कार्त्तिके सविशेषतः ।
तडागस्य विधिः कार्य्यः स्थिरनक्षत्रयोगतः ॥
मुनयः केचिदिच्छन्ति व्यतीते चोत्तरायणे ।
न कालनियमस्तत्र सलिलं तत्र कारणम् ॥

इति वाप्यादिप्रतिष्ठाकालनिर्णयः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिष्ठाकालनिर्णयो नाम पञ्चदशोऽध्यायः ।

---

## अथ षोडशोऽध्यायः ।

### अथ दीक्षाकालः ।

तत्र नानादेवतादीक्षाकालः कालोत्तरे ।

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ वरः ।
तयोरसम्भवे वर्षा नान्यत्रापि प्रशस्यते ॥
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यालम्भनकर्मणि ।
कार्त्तिक्याञ्चैव वैशाख्यां स्वर्भानोरविदर्शने ॥

तत्रैव ।

चन्द्र-सूर्य्योपरागेषु षड्शीतिमुखेषु च ।
ग्रह-नक्षत्रयोगेषु विषुवत्सुदिनेषु च ।
अयनेषु च सर्व्वेषु योगः सर्वार्थसिद्धिदः ॥

कारणे ।

पूर्वाषाढे च माघे च आषाढे मृगशीर्षके ।
दीक्षां न कारयेद्धीमान् अन्यमासेषु कारयेत् ।
शुक्लपक्षे शुभर्क्षे च सुवार-तिथिभिर्युते ॥

क्रियाकाण्डशेखरे ।

न विना पर्व्व दीक्षा स्यादर्षासु मधु-पौषयोः ।
अन्यत्र तु सदा कार्य्या विशुद्धौ गुरु-शिष्ययोः ॥

वर्षादौ तु निमित्तानि प्रशस्तान्युपलक्षयेत् ॥

वर्षादिषु निषिद्धेष्वपि कालेषु कदाचिच्छुभशकुनाद्युपलम्भे सति दीक्षा कर्त्तव्येत्यर्थः ।

प्रसिद्धास्तिथयोराकृदर्शनं गुरुपर्व च ।
पवित्रका तिथिश्चापि दीक्षाकर्मविधौ वरा ॥

रत्नावल्याम् ।

चतुर्थीं नवमीं षष्ठीमष्टमीञ्च[१] चतुर्दशीम् ।
पूर्णमासीं विना शेषा हिता मुक्तौ मुमुक्षुषु ।
आदित्यं मङ्गलं सौरिं त्यक्त्वा वारास्तु भूतये ॥

सुप्रभेदे ।

सप्तम्याञ्च नवम्यां वा एकादश्यामथापि वा ।
दशम्याञ्च त्रयोदश्यां दीक्षाकर्म प्रशस्यते ॥

क्वचित्तु त्रयोदश्याममावास्यामिति पाठः ।

सितेन्दु-ज्ञ-गुरूणान्तु परीक्षेत गुणागुणैः ।
गुणैर्युक्तास्तु संग्राह्या गुणहीनांस्तु वर्जयेत् ॥

कालोत्तरे ।

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च ।
पूर्णमास्यां प्रकर्त्तव्यं भूतिकामैः सिते सदा ॥
मुक्तिकामैः कृष्णपक्षे यत्किञ्चित्कर्म चाचरेत् ।
दिनच्छिद्राणि मुक्ताय याश्चान्यास्तिथयः स्मृताः ॥

तत्त्वसागरसंहितायाम् ।

---

(१) षष्ठीं पञ्चमीञ्चेति क० ।

तां तां तिथिं पुरालोच्य तदुक्तां तत्र दीक्षयेत्।

इन्द्र उवाच।

कस्य का तिथिरुद्दिष्टा विशेषं वद नारद।
संक्षेपेणैव दीक्षायां विशेषावसरं तथा॥

नारद उवाच।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः।
चतुर्द्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी॥
द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका।
नित्यमार्गेषु पार्वत्या अष्टमी च चतुर्दशी॥
अष्टमी गणनाथस्य भानोः प्रोक्ता तु सप्तमी।
एवंमुखास्तु संक्षेपात्तिथयः परिभाषिताः।
प्रपञ्चेन तिथीः सर्वाः पविचारोपणे स्मृताः।

कारणे।

पौष्णं रौहिण्यथादित्यं श्रवणश्चाश्विनी तथा।
सावित्रं त्वाष्ट्र-वायव्ये नैर्ऋतं मैत्रमेव च॥
तिष्यं त्रिरुत्तरार्द्रा तु श्रविष्ठा च त्रिजन्मभम्।
नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रत॥

रत्नावल्याम्।

त्रीण्युत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकम्।
हस्तः स्वातिरनुराधा मघा मूलश्च रेवती॥
अभिजिच्छ्रवणश्चेति शिवयोगे चतुर्दशी।
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः स्मृतः॥

सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः।
वरीयांश्च शिवः सिद्धोब्रह्मा ऐन्द्रश्च षोडश॥
निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये।
किन्तु दैशिकसेकादौ शुभान्यत्रापि पूर्ववत्॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा।
पूर्वाभाद्रपदा ज्येष्ठा दशमी रोहिणी तथा॥
द्वादश्या सर्पनक्षत्रमर्य्यम्णा च त्रयोदशी।
नक्षत्रतिथ्या इत्येते देवानामपि नाशदाः॥

कारणे।

राशयश्च चराः श्रेष्ठा मध्यमाश्चोभये स्मृताः।
स्थिरश्च नैधनस्थाने ग्रहाः सर्वे विवर्जिताः।
आचार्य्य-शिष्ययोरानुकूल्यं शुभप्रदं भवेत्॥

क्रियाकाण्डशेखरे।

राश्यादिवर्गसंशुद्धिर्लग्नचन्द्रार्कयोरपि।
बलं गोचरशुद्धिश्च योगशास्त्रे प्रतीयताम्॥
लग्नदोष-ग्रहदोषाः सर्वे नश्यन्ति ते शुभे।
लग्नस्थे भार्गवे प्रौढे केन्द्रस्थे च वृहस्पतौ॥
इत्यादिनिपुणं वीक्ष्य दीक्षां मौसुक्षवीश्मति।
मौसुक्षवीं प्रति न यत्कालादिनियमः स्मृतः॥
मन्त्रवर्णेषु सिद्धान्वै सुसिद्धान्मेलयेद्बुधः।
वैवर्णवानुदासीनान् गणयेद्दशभिः पृथक्॥
सिद्धराशौ हरेद्भागं वसुभिर्भानुभिः स्वरैः।

शुद्धराशिस्तु यः शेषोयामे सञ्ज्ञोदिता हि सा ॥
रिपुराशिगतः शेषोमासोऽसौ परिकीर्त्तितः।
हरेत्पञ्चदशं भागं तिथिज्ञानाय सत्वगम् ॥
मासि तस्मिंस्तथा यामे कुर्वीत ग्रहणं मनोः।
ज्योतिःशास्त्रात्सुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥

अत्र दीक्षार्थं प्रशस्तास्तिथीः प्रतिपाद्य तत्त्वसागरसंहितायाम् उक्तं हि।

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु।
दुर्लभे सद्गुरूणान्तु सकृत्सङ्ग उपस्थिते।
तदनुज्ञा यदा लब्धा स दीक्षावसरोभवेत् ॥
ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥
प्राप्ता दीक्षा तदा ज्ञेया गुरौ च समुपस्थिते।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥

इति नानादेवदीक्षाकालः।

---

## अथ विष्णुदीक्षाकालः।

ऋतुपञ्चरात्रे।

विज्ञाय नीतिप्रवणं हि शिष्य-
मुदग्गतौ तीक्ष्णकरस्य काले।

सोमस्य वृद्धौ शुभलग्नयुक्ते
मन्दोच्चयेद्दै कृपया गुरुस्तु ॥

महापञ्चरात्रे ।

द्वादश्यां शुक्लपक्षस्य सूर्य्यसंक्रमणे तथा ।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यायामथवा कालमुद्दिश्य देशिकः ।
तदेकदित्र्यहःपूर्वमधिवासनमारभेत् ॥

तत्त्वसागरसंहितायाम् ।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी शिवे प्रोक्ता वाचः प्रोक्ता चतुर्दशी ॥

शैवपञ्चरात्रे नवकदीक्षाविषये ।

दीक्षाविधौ वा नवके च काले
स्याद्वादशी पञ्चदशी तिथिस्तु ।
एकादशी पञ्चदशी तिथिर्वा
भवेच्चतुर्द्दश्यथवाष्टमी च ।
यात्रादिके योगविधौ प्रशस्ता
स्याद्दैवतानां नवमी चतुर्थी ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये दीक्षाकालो नाम षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।

### अथ नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

विष्णुधर्मोत्तरे ।

कालश्च द्विविधोज्ञेयः स्थूल-सूक्ष्मोपलक्षितः ।
स्थूलश्च लौकिकोज्ञेयः सूक्ष्मश्चाध्यात्मिकस्तथा ॥
सर्वं स्थूले च कर्त्तव्यं स्थूलं कालविधिं शृणु ।
खस्थानकाक्षिनिमिषतुर्य्यभागस्त्रुटिः स्मृतः ॥
तद्द्वयन्तु लवः प्रोक्तो निमेषस्तद्द्वयं भवेत् ।
निमेषाः पञ्चदश काष्ठाः त्रिंशत्काष्ठाः कला स्मृता ॥
त्रिंशत्कला मुहूर्त्तश्च तदेव घटिकाद्वयम् ।
सार्द्धाश्च नाडिकाः सप्त यामस्तत्सन्धिरुच्यते ।
सन्ध्ययोऽष्टौ समाख्याता अहोरात्रं विचक्षणैः ॥
यजनं प्रतिमानन्तु उत्तमन्त्वतिकीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामके ॥
यजनं मध्यमं मध्य उदयेऽस्तमनं समं ।
परार्द्धसेषु कालेषु पूजयेत्तु विशेषतः ॥
द्विकालं वा त्रिकालं वा आत्मार्थं संप्रपूजयेत् ।
पूजारम्भाय वक्ष्यन्तं सर्वं सन्ध्याविधिं कुरु ॥
सन्ध्यादिक्रमणाद्दोषाः कृते चेत्तु न दोषकः ।

पूर्वाह्ने चैव मध्याह्ने प्रदोषे बलिमाहरेत् ॥
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् ।
अर्द्धयामे बलिं कुर्य्यात् काम्यार्थी तु विशेषतः ॥
नित्योत्सवे च पूजायां तथा संवत्सरोत्सवे ।
कारयेत्तु विशेषेण अन्यथा चेन्न कारयेत् ॥
भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥
पूर्वाह्लाच्च समारभ्य यावत्तु दश नाड़िकाः ।
मध्याह्न इति विज्ञेयः स्थापनारोपणादिषु ॥
मध्याह्नात्तु समारभ्य यावत्तु दश नाड़िकाः ।
सायङ्काल इति प्रोक्तः प्रदोषमधुना शृणु ॥
अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥
प्रदोषान्तं समारभ्य त्रिपादेन त्रिनाडिकाः ।
अर्द्धयाम इति प्रोक्तश्चार्द्धरात्रमथोच्यते ॥
अर्द्धयामान्तमारभ्य यावत्तु दश नाड़िकाः ।
अर्द्धरात्रमिति प्रोक्तं रात्रिनर्क्तमथोच्यते ॥
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिकाः ।
रात्रिर्नक्तमिति प्रोक्तं ज्ञात्वैवं सर्वमाचरेत् ॥
जलसंग्रहणं पुष्पसंग्रहं यजनं तथा ।
उदयादेव कर्त्तव्यं रात्र्यन्ते वा जलग्रहः ।
देवतास्थापनं तीर्थं प्रातःकाले समाचरेत् ॥

प्रातःकालात्समारभ्य यावद्वै दश नाडिकाः ।
तावद्वापि प्रकर्त्तव्यं तीर्थकार्य्यं प्रजापते ॥
अङ्कुरार्पणकार्य्यं तु उत्सवस्याधिवासनं ॥
सायञ्च प्रारभेद्धीमान् रक्षाञ्चैव प्रबन्धने ॥
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च ।
अधिवासनानि सर्वाणि मध्यरात्रे तु कारयेत् ॥
रात्र्यन्तके विशेषेण सर्वदेवक्रियार्थकं ।
कुर्यात्परं महाशब्दं तदाशुभनिवृत्तये ॥

इति नित्य-नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

---

## अथ विष्णुपूजाकालः ।

तत्र विष्णुधर्मोत्तरे ।

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिं ।
अपूज्य भोजनं कुर्वन् नरकाणि व्रजेन्नरः ॥

नारदीये ।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशवं ।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण सङ्क्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

निमित्तेषु च सर्वेषु तत्काले च विशेषतः ।
पूजयेद्देवदेवेशं द्रव्यं सम्पाद्य यत्नतः ॥

इति विष्णुपूजाकालः ।

---

## अथ देवताविशेषपूजने तिथिविशेषाः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

प्रतिपत्पावकी प्रोक्ता द्वितीया शमनस्य तु ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ॥
पञ्चमी नागराजानां षष्ठी स्कान्दी तिथिः स्मृता ।
सप्तमी सप्तसप्तेस्तु अष्टमूर्त्तेस्तथाष्टमी ॥
नवमी योगिनीनान्तु यमस्य दशमी तथा ।
एकादशी धनेशस्य द्वादशी चक्रिणस्तथा ॥
त्रयोदशी त्वनङ्गस्य भूतेशस्य चतुर्दशी ।
पौर्णमासी प्रजेशस्य पितृणां दर्श उच्यते ॥

इति देवताविशेषपूजने तिथिविशेषाः ।

---

## अथ कामनाविशेषात्तिथ्यादिविशेषे देवताविशेषपूजा ।

भविष्यत्पुराणे ।

अग्निमिष्ट्वा च हुत्वा च प्रतिपद्यमृतं घृतम् ।
हविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥
ब्रह्माणञ्च द्वितीयायां संपूज्य ब्रह्मचारिणः ।

भोजयित्वा च विद्यानां सर्व्वासां पारगो भवेत् ॥
तृतीयायां च वित्तेशं वित्तेशो जायते ध्रुवम् ।
क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्य्यात् चतुर्थ्यां सर्व्वकर्मसु ।
अविघ्नं विदुषां विप्र कार्य्यनाशश्च कर्हिचित् ॥
नागानिष्ठा च पञ्चम्यां न विषैरभिभूयते ।
स्त्रियं वा लभते पुत्त्रान् पराञ्च श्रियमाप्नुयात् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मायावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूजयेत् देवं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो गोचूड़ाभरणो हरः ।
ज्ञानं ददाति विपुलं कामजान् यच्छते गुणान् ॥
मृत्युहा धनदश्चैव पापहा च प्रपूजितः ।
दुर्गां संपूज्य दुर्गानां नवम्यां तरणेच्छया ।
संग्रामे व्यवहारे च सदा विजयमादिशेत् ॥
दशम्यां धर्म्मराजस्तु सर्व्वव्याधिहरो ध्रुवम् ।
नरकादपमृत्योश्च समुद्धरति मानवम् ॥
एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः ।
प्रजां वृद्धिञ्च धान्यञ्च प्रयच्छन्ति महीं तथा ॥
द्वादश्यां पूजितो देवः सर्व्वैश्वर्य्यसमन्वितः ।
बहुपुत्त्रो बहुधनस्तथा स्यान्नात्र संशयः ॥
त्रयोदश्याञ्च सम्पूज्य कामदेवं महाबलम् ।

पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् ॥
चतुर्द्दश्यां महादेव उमाकान्तो जगद्गुरुः ।
सम्पूजितो महाभक्त्या सर्व्वान् कामान् ददात्यसौ ॥
पौर्णमास्याञ्च यः सोमं पूजयेत् भक्तिमान् नरः ।
बह्वपत्यं भवेत् तस्य इति मे निश्चिता मतिः ॥
अमायां पितरः पिण्डैरिष्टाः कुर्व्वन्ति सर्व्वदा ।
पूजां वृद्धिं धनं रक्षामायुष्यं बलमेव च ॥
उपवासं विनाप्येते भवन्त्युक्तफलप्रदाः ।
पूजिता जपहोमैश्च तोषिता भक्तितः सदा ॥
मूलमन्त्रास्तु संज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः ।
पूर्व्वञ्च पद्मपत्रस्थाः कर्त्तव्याश्च तिथीश्वराः ॥

एतेषाञ्च रूपाणि देवताकाण्डे आलोकनीयानि ।

गन्ध-पुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजा श्राद्धे न कर्त्तव्या कृतापि न फलप्रदा ॥
आज्यधारासमिद्भिश्च दधि-क्षीरान्न-माक्षिकैः ।
यथोक्तफलदो होमो जपः शान्तेन चेतसा ॥
कृत्वा यज्ञं दशाब्दे च[१] फलान्येतानि भक्तितः ।
यथोक्तानि यथोक्तानि लभेतेहाधिकानि तु ॥
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ।
तेषां लोकेषु मन्त्रज्ञो यावतीह[२] तिथिः स्मृता ॥
इह तस्मात् परिभ्रष्टस्तद्भक्तो जायते नरः ।

---

(१) दश-द्वे चेति ख० ।　　(२) यावत्येहेति ख० ।

सुरूपोधनसम्पन्नोनिर्ज्जितारिर्महीपतिः ।
स्त्रीपुत्रपुंसको वापि जायते पुरुषोत्तमः ॥

कूर्म्मपुराणे ।

देवताभ्यर्च्चनं नृणामशेषाघौघनाशनम् ।
अमावास्यां तिथिं प्राप्य यस्त्वाराधयते भवम् ।
ब्राह्मणं पूजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्द्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारस्त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे सर्व्वपापैः प्रमुच्यते ॥
अमावास्यामथावाप्य उद्दिश्य च पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्व्वपातकैः ॥
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ।
सप्तम्यामर्चयेद्भानुं मुच्यते सर्व्वपातकैः ॥
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम् ।
पूजयेत् सप्तजन्मस्थैर्मुच्यते पातकैर्नरः ॥
एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥

विष्णुधर्म्मोत्तरे ।

मार्कण्डेय उवाच ।
कालं तवाहं वक्ष्यामि देवतापूजने पृथक् ।
संवत्सरेण सर्वञ्च सोपवासस्य सर्वदा ॥

ब्रह्माणं पूजयेत् देवं सततं प्रथमेऽहनि ।
पक्षद्वये महाभाग पञ्चदश्यामुपोषितः ॥
संवत्सरेण धर्मज्ञ विद्याबद्धसुवर्णकम् ।
हंसयुक्तेन यानेन ब्रह्मलोकं प्रपद्यते ॥
चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद् भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम् ।
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥
कालस्यावयवाः सर्वे तस्मिन्नहनि पूजिताः ।
ग्रहर्चाणि च धर्मज्ञ सौख्यं दद्युरनुत्तमम् ॥
संवत्सराधिपं नागं तस्मिन्नहनि पूजयेत् ।
यस्माच्च सौख्यमाप्नोति स्वास्थ्यमत्यन्तमेव च ॥
तथाग्निं ब्रह्मणा सृष्टं त्रैलोक्ये प्रथमं द्विज ।
दक्षं प्रजापतिं नित्यं द्वितीयायामथार्चयेत् ।
फलमाप्नोति धर्मज्ञ गोमेधस्य न संशयः ॥
तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम् ।
नित्यमारोग्यमाप्नोति तथा रूपञ्च भार्गव ॥
शुक्लपक्षे द्वितीयायां बालचन्द्रस्य पूजनम् ।
कृत्वा दत्त्वा च लवणं प्रायाचौ सुभगो भवेत् ॥
साध्या द्वादश ये प्रोक्तास्तेषां कृत्वा तु पूजनम् ।
तृतीयायां महाभाग द्वादशाहफलं भवेत् ॥
तृतीयायां तदाभ्यर्च्य ब्रह्म-विष्णु-महेश्वरान् ।
पृथक् पृथक् महाभाग त्रिवर्गफलभाग् भवेत् ॥

त्रीन् लोकांश्च तदा नाम सम्यक् संपूज्य यत्नतः।
ऐश्वर्य्यं महदाप्नोति गतिमग्र्यांश्च विन्दति॥
तृतीया श्रावणे कृष्णा या स्यात् श्रवणसंयुता।
तस्यां संपूज्य गोविन्दं पुष्टिमग्र्यामवाप्नुयात्॥
वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च॥
सा तस्मात् कृत्तिकोपेता विशेषेण सुपूजिता।
तत्र दत्तं हुतं जप्तं सर्व्वमक्षयमुच्यते॥
अक्षया सा तिथिस्तस्मात् तस्यां सुकृतमक्षयम्।
अक्षतैः पूजितो विष्णुस्तेन साप्यक्षया मता॥
अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान्।
वरान् सुसंस्कृतांश्चैव कृत्वा चैव तथाक्षतान्॥
विप्रेषु दत्त्वा तानेव तथा शक्तून् सुसंस्कृतान्।
यवान्नं सुमहाभाग फलमक्षयमश्नुते॥
एकामप्युक्तवत् कृत्वा द्वितीयां भृगुनन्दन।
एतामब्दतृतीयानां सर्वासान्तु फलं लभेत्॥
प्रोक्तास्तु भृगवो नाम देवा द्वादश ये पुरा।
चतुर्थ्यां पूजनं तेषां कृत्वा दिवमवाप्नुयात्॥
यमराजपूजनं कृत्वा चतुर्थ्यामेव धार्म्मिकः।
नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः॥
विनायकमथाभ्यर्च्य चतुर्थ्यां यदुनन्दन।
सर्वविघ्नविनिर्मुक्तः कार्य्यसिद्धिमवाप्नुयात्॥

निद्रां रतिं तथा श्रद्धां कीर्त्तिं मेधां सरस्वतीम् ।
प्रज्ञां पुष्टिं तथा कान्तिं तत्रैवाहनि पूजयेत् ॥
तत्प्रसादादवाप्नोति यथेष्टं मनुजोत्तम ।
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥
देवानां मातरः सर्वास्तत्र तत्राह्नि पूजिताः ।
सर्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥
पञ्चम्यां पूजनं कृत्वा तथा च मनसा नरः ।
सौभाग्यं महदाप्नोति यमस्याप्यस्य विन्दति ॥
पञ्चम्यां पृथिवीं देवीं तथा संपूजयन्नरः ।
तामवाप्नोति यत्नेन नात्र कार्य्या विचारणा ॥
विश्वेदेवास्तु ये प्रोक्ताः पूर्वमेव मया दश ।
तेषां संपूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥
दृष्टं गन्धर्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ।
तथा चित्ररथं तेषां राजानन्तु विशेषतः ॥
देवभार्य्यास्तथा सर्वाः संपूज्य सुभगो भवेत् ।
दृष्ट्वा त्वप्सरसश्चैव तथा रूपमवाप्नुयात् ॥
दृष्टं नागं तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ।
वारुणे पुष्करस्यार्चां पञ्चम्यां समारभेत् ॥
सर्वकामसमृद्धस्य यज्ञस्य सुफलं भवेत् ।
तथा च पूजयेद्राजन् तथैव नलकूवरम् ॥
श्रियः संपूजनं कृत्वा पञ्चम्यां प्रयतः सदा ।
श्रियमाप्नोति विपुलां संवत्सरमथोदिताम् ॥

सर्व्वस्यां नृप पञ्चम्यां रतिं प्रीतिं सरस्वतीम्।
उमां मेधां भद्रकालीं तथा कात्यायनीमपि॥
धृतिं स्वाहां स्वधामृद्धिं अनसूयां तथा क्षमाम्।
सुरभिं देवसेनाञ्च वेलां ज्योत्स्नां तथा शचीम्॥
गौरीं वरुणपत्नीञ्च यमपत्नीं तथैव च।
धूमाख्यां सुमहाभागां मृत्युच्छायां तथैव च॥
अभीष्टदेवजननीं देवपत्नीं तथैव च।
पूजयेत् काममाप्नोति तस्यान्त्येकामसंशयम्॥
ऐरावतञ्च गरुड़मुच्चैःश्रवसमेव च।
हरस्य वृषभञ्चैव शस्त्राण्यस्त्राणि यानि च।
तथा संपूजयेद्राजन् विजयं समुपाश्नुते॥
तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमी।
नागसम्पूजनं कृत्वा धनभागी भवेन्नरः॥
कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा।
चतुरात्मविनिर्द्दिष्टो भगवान् क्रौञ्चसूदनः॥
तमभ्यर्च्च्य नरः षष्ठ्यां पुत्त्रानाप्नोत्यभीप्सितान्।
बालानां पूजनात् श्रेयो नरः प्राप्नोत्यसंशयम्॥
रुद्राणां पूजनं तत्र कृत्वा तु सुखमाप्नुयात्।
स्कन्दपार्श्वचरान् राजन् रुद्रपार्श्वचरानपि।
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात्॥
कालपाशांस्तथाभ्यर्च्च्य सूर्य्यपत्नीं सुवर्चसम्।
ईष्टान् कामानवाप्नोति नात्र कार्य्या विचारणा॥

एवमेकोनपञ्चाशत् मरुतो नाम कीर्त्तिताः ।
तेषां सम्पूजनं कृत्वा सप्तम्यां दिवमाप्नुयात् ॥
हृष्टस्य पूजां शैलस्य तदा कृत्वा सुखी भवेत् ।
पूजयित्वा तथाभीष्टां सरितं पुण्यभाग् भवेत् ॥
वह्निसम्पूजनं कृत्वा वह्निष्टोममवाप्नुयात् ।
वायोः सम्पूजनं कृत्वा प्राप्नोति परमां गतिम् ॥
सम्पूज्य च ऋषीन् सप्त सोमयज्ञास्तु ये स्मृताः ।
तदा प्राप्नोति तानेव गतिमग्र्याञ्च विन्दति ॥
सप्तम्यां यदुशार्दूल दृष्टमभ्यर्चयेन्मुनिम् ।
स्वाध्यायफलमाप्नोति तदापि फलमश्नुते ॥
पूजयित्वा समुद्रांश्च द्वीपमध्ये तदा नरः ।
पातालस्थान् महाभाग भुवमाप्नोत्यभीप्सिताम् ॥
सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत् ।
धीदाश्चैव तथैवार्य्यां मतिमप्रमितां लभेत् ॥
गङ्गां सप्तप्रकाराञ्च तथा देवीं सरस्वतीम् ।
सप्त यज्ञानवाप्नोति नरः सम्पूज्य वै ध्रुवम् ॥
आदित्यं पूजयित्वा वै शीघ्रं रोगैः प्रमुच्यते ।
सप्तम्यां यादवश्रेष्ठ मतिमग्र्याञ्च विन्दति ॥
एकानंशां तदा देवीं तथा सम्पूजयन्नरः ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥
नरेन्द्रपूजनं कृत्वा मतिमग्र्यां तथा लभेत् ।
जयन्तं शक्रतनयं पूजयित्वा सुखी भवेत् ॥

अष्टम्यां पूजनं कृत्वा वसूनां धर्म्मवित्तमः[१]।
नाकलोकमवाप्नोति वह्निश्च[२] मनसेप्सितम् ॥
चतुष्पथेषु रथ्यासु तथैवोदूखलेषु च ॥
गिरिशृङ्गेषु रथ्यासु नदीतीरेषु चाप्यथ।
गुहासु च नवां रथ्यां[३] पिशाचानां बलिं हरेत् ॥
शक्रादीनाञ्च देवानां कृत्वा सम्पूजनं ततः।
तेषां बलिं विनिक्षिप्य क्षेममाप्नोति मानवः ॥
आयुधं पूजयित्वा तु तदा विजयमाप्नुयात्।
दशम्यां पूजयित्वा वै वैश्वदेवांस्तथा दश।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सम्पूजयेद्राजन् तथैव च दिशो दश।
क्रियासु फलमाप्नोति यत्र यत्राभिजायते ॥
धर्मं सम्पूज्य देवेशं सर्वसत्त्वसुखावहम्।
धर्म्यां गतिमवाप्नोति धर्म्मञ्च फलमेव च ॥
एकादश्यान्तु संपूज्य रुद्रानेकादश प्रभो।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सर्वगतान् रुद्रान् मुदा[४] सर्वत्र पूजयेत्।
सर्व्वान् कामानवाप्नोति सर्व्वगानपराजितान् ॥
तथा च द्वादशादित्यान् द्वादश्यां पूजयेन्नरः।

---

(१) धर्म्मवित्तत्तम इति क०। (२) वह्निं चेन्मनसि स्थितमिति क्वचित्पाठः।
(३) रथ्यां प्राप्येत्यर्थः। (४) सदेति ग०।

द्वादश्यां समवाप्नोति गतिमग्र्याञ्च विन्दति ॥
द्वादश्यां देवदेवेशं पूजयित्वा जलाधिपम् ।
पुण्डरीकमवाप्नोति वरुणं यादसां पतिम् ॥
सर्व्वदेवेश्वरं शक्रं पूजयित्वा तथा नरः ।
सर्व्वान् कामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥
विष्णोः संपूजनं कृत्वा कामानाप्नोत्यभीप्सितान् ।
इष्टमग्र्यं फलं प्राप्य गतिमग्र्याञ्च विन्दति ॥
त्रयोदश्यामथाभ्यर्च्य कामदेवं जगत्पतिम् ।
सौभाग्यं महदाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रशुक्लत्रयोदश्यां कामदेवमथार्चयेत् ।
अर्चनात् सर्व्वमाप्नोति फलं संवत्सरोदितम् ॥
यक्षाणां राक्षसानाञ्च चतुर्द्दश्यान्तु पूजनम् ।
कृत्वा क्षेममवाप्नोति क्रियासाफल्यमेव च ॥
पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम् ।
बहुवित्तमवाप्नोति फलं संवत्सरोदितम् ॥
शङ्ख-पद्मौ तथाभ्यर्च्य निधाने यक्षपूजिते ।
मणिभद्रं तथाभ्यर्च्य धनं प्राप्नोत्यसंशयम् ॥
पूजयित्वा महादेवं सर्व्वान् कामानवाप्नुयात् ।
माघमासे चतुर्द्दश्यां कृष्णपक्षे विशेषतः ॥
तथा पितृगणान् राजन् क्षीणचन्द्रे तु पूजयेत् ।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
श्राद्धं कृत्वा तथा राजन् सर्व्वान् कामानवाप्नुयात् ।

स्वर्णमिन्दुं तथाभ्यर्च्च सौभाग्यं महदाप्नुयात् ॥
दुष्टं ग्रहमथाभ्यर्च्च नक्षत्रमथवा नृप ।
तस्मात् क्षेममवाप्नोति कामञ्च यदुनन्दन ॥
मासनाम च नक्षत्रं करणं योगमेव च ।
पूजयित्वा तथा राजन् सौभाग्यं महदाप्नुयात् ॥
सोपवासस्तु नक्षत्रं नक्षत्रेशमथार्चयेत् ।
नक्षत्रवासभागे च तस्मात् काममवाप्नुयात् ॥
कार्त्तिकेयं महाभागं कृत्तिकास्वर्चयेन्नरः ।
वह्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत् ॥
कृत्तिकासु तथाभ्यर्च्च खड्गं विजयमाप्नुयात् ।
भोगिनं नागमभ्यर्च्च श्रियमाप्नोत्यनुत्तमाम् ॥
कामदेवमथाभ्यर्च्च भाग्यं सौभाग्यमाप्नुयात् ।
सावित्रे च तथा हस्ते जप्त्वा साफल्यमाप्नुयात् ॥
दृष्टग्रहार्चितं देवं तन्नागं यक्षमेव च ।
गन्धर्व्वं वा ग्रहं वापि तस्मात् कामानवाप्नुयात् ॥
कृष्णपक्षे चतुर्द्दश्यां महाकालमथार्चयेत् ।
सर्व्वान् कामानवाप्नोति तथेशं नात्र संशयः ॥
महेश्वरं मातृगणं तथा वह्निं प्रपूजयेत् ।
एकां वा मातरं राजन् काममाप्नोत्यभीप्सितम् ॥
तथा तुम्बुरुगन्धर्वपञ्चकं पूजयेन्नरः ।
सर्वत्र जयमाप्नोति नात्र कार्य्या विचारणा ॥
कृत्तिकासु नरोऽभ्यर्च्च स्कन्दपार्श्वचरांस्तथा ।

आरोग्यं महदाप्नोति यदा वा मनसेप्सितम् ॥
नृसिंहप्रतिमाञ्चैव पूर्णचन्द्रं समर्चयेत् ।
नरो मातृगणान् राजन् सर्वकाममनोरमान् ॥
एकां वा मातरं राजन् कामानाप्नोत्यभीप्सितान् ।
वानस्पत्यमवाप्नोति पूजयित्वा वनस्पतीन् ॥
देवानां मानवानाञ्च तत्पदा ये तथापरे ।
तेषां सम्पूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥
करणे वा मुहूर्त्ते वा यथावद् देवमर्चयेत् ।
तस्मात् काममवाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रमासमथारभ्य यथोक्तेऽह्नि नरः सदा ।
इष्टदेवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥
संवत्सरेण धर्मज्ञ नक्षत्रे यदि वा तिथौ ।
ग्रहेषु सर्वधर्मज्ञ सोपवासः समाहितः ॥
संवत्सरे वाप्ययने ऋतौ मासे च तद्दिने ।
नक्ताशी संयतः पूजां कृत्वा तत्स्वामिनः सदा ।
तावत्कालं महाभाग तस्मात् काममवाप्नुयात् ॥

चैत्रात् समारभ्य महानुभाव
रोचेत यस्तं सुरमर्चयानः ।
तस्येह तोषात् परमं स कामम्
प्राप्नोति यत्नात् यदुवंशचन्द्र ॥

इति कामनाविशेषेण तिथ्यादिविशेषे देवताविशेषपूजा ।

---

## अथ कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा।

देवीपुराणे ब्रह्मोवाच।

देवता यत्र नक्षत्रे यदा दृष्टिस्थिता तदा।
ऊरुस्थो यत्नदेवस्तु तदा स फलभाग् भवेत्॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम्।
नक्षत्राणि च सर्वाणि यत्नांश्चैव पृथक् पृथक्॥
अश्विन्यामश्विनाविष्टा दीर्घायुर्जायते नरः।
व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीड़ितः॥
भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः।
तथा गन्धादिभिः शुभ्रैरपमृत्योर्विमुच्यते॥
अनलः कृत्तिकायान्तु ऋद्धिं सम्पूजितः पराम्।
[१]रक्तमाल्यादिभिर्दद्यात् हुतहोमेन च ध्रुवम्॥
इष्टः प्रजापतिः पूज्य इष्टान् दद्यात्पशूंस्तथा।
रोहिण्यां देवशार्दूल दद्याच्च हरिकुञ्जरान्॥
मृगशीर्षे तथा सोमं जयमारोग्यमेव च।
आर्द्रायान्तु शिवं पूज्य पशून् विजयमश्नुते॥
सितैः पद्मादिभिर्द्रव्यैर्देवलं पयसा च वै।
पुनर्वसौ चाप्यदितिं सदा सम्पूजनादिभिः॥
चक्षुणा तर्पिता चैव तानेव परिरक्षति।

(१) रक्तेति ग०।

तिष्ये वृहस्पतिर्वृद्धिं ददाति विपुलं धनम् ॥
पान-गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः ।
तर्पितस्तु पितृगणो भक्ष्याद्यैर्मधुरैः शुभैः ॥
मघायां विजयन्दद्यात् पूर्व्वायान्तु भगस्तथा ।
भर्त्तारमीप्सितं कुर्य्यात् कन्यायाः पुरुषस्य च ॥
इह जन्मनि चायुष्यमुत्तरस्यां तथार्य्यमा ।
पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥
शस्तैः पुष्पादिभिः सर्व्वैर्ददाति विपुलन्धनम् ।
राज्यं लष्टा च चित्रायां निस्सपत्नं प्रयच्छति ॥
स्वात्यां सन्तर्पितोवायुर्दद्यादायुर्बलं परम् ।
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूजयेत् ॥
धनं राज्यं बलं स्नेहस्तेजांसि निवसेत् सदा ।
अनुराधां समासाद्य मित्रं सम्पूज्य भक्तितः ॥
प्रियो भवति सर्व्वेषां निर्म्मलं चित्तमाप्नुयात् ।
ज्येष्ठायां पूर्व्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥
गुणैः सर्व्वैस्तु सम्पूज्य कर्म्मणा च धनेन च ।
मूले तु निर्ऋतं सम्यक् भक्त्या सम्पूज्य पूर्व्ववत् ॥

इति कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

---

## अथ निमित्तनक्षत्रादेः संयोगविशेषे देवता-विशेषपूजा।

देवीपुराणे ब्रह्मोवाच।

शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि।
अल्पक्लेशं महापुण्यं ग्रहर्क्ष-तिथियौगिकम्॥
शृणु कृष्णाष्टमीयोगं शिवयोगेषु चोत्तमम्।
मृदुवर्गश्च भाग्यश्च उमया भृगुवासरे॥
दैवयोगाद्यदा षष्ठी पुष्यर्क्षे रविवासरे।
स्कन्दयागस्तदा कार्य्यः सर्वकामप्रसाधकः॥
यदा तु सूर्य्यवारेण सप्तमी विजया तु सा।
तदा सम्भवते भानोर्यागः सर्वगुणावहः॥
शनिरिक्तासमायोगे आर्द्रर्क्षे मातृपूजनम्।
मायाद्याः कालिकाद्याश्च यष्टव्या विधिना मुने।
सम्पूर्णं फलमाप्नोति स्वस्थाने चेश्वरो भवेत्॥
पुष्पैरिष्ट्वा जलं श्वेतैः पूर्वाश्विने च पूर्ववत्।
स पापात् मुच्यते क्षिप्रं शारीरात् मानसात्तथा॥
आषाढ़ासु तथा विद्यानुत्तराषाढ़योगतः।
विश्वान् सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति चात्मनः॥
श्रावणे त्वसिते विष्णोः पुष्पैर्धूपैश्च भक्तितः।
सन्तर्प्य श्रियमाप्नोति धनं विजयमेव च॥
धनिष्ठायां वसूनिष्ट्वा न भयं विन्दते क्वचित्।
महान्तोऽपि तथा तेषां गन्ध-पुष्पादिभिः शुभैः।

वरुणन्तु समभ्यर्च्य व्याधिभिर्मुच्यते भृशम् ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्य्यमेव च ।
अजं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्य्या विचारणा ॥
उत्तरायामहिर्बुध्नं पराङ्गतिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति सततं पशून् ॥
सितैः पुष्टिं क्षितिं चैव धृतिं विजयमेव च ।
यच्चैते समाख्याता यज्ञाः सङ्क्षेपतो मया ॥
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ।
भक्त्या वित्तानुसारेण भवन्ति फलदा ध्रुवम् ॥
गन्तुं चेच्छेद् यदा ग्रामं यात्रायां ध्रुवमेव च ।
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् ।
एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपङ्कुर्य्याद्धोमङ्कुर्य्याद्यथेप्सितम् ॥

इति तिथिनक्षत्रादिसंयोगविशेषे देवताविशेषपूजा ।

---

## अथ पवित्रारोपणकालः ।

तत्र शिवपवित्रारोपणकालः ।

शिवधर्म्म-भविष्यत्पुराणयोः ।

पौर्णमास्यां तथा षष्ठ्यां शिवं सम्पूज्य यत्नतः ।

उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् ॥
पुनरेव च कार्त्तिक्यां पूज्य शम्भुं चमापयेत् ।
यतिभ्यो दक्षिणां दद्यात् सूत्रवस्त्रादिपूर्विकाम् ॥
यः कुर्यात्सकृदप्येवं चातुर्मास्यं पवित्रकम् ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥
पुण्यक्षयात्परिभ्रष्टश्चतुर्वेदश्च जायते ।
इहागतो भवेद्राजा गुरुरूपसमन्वितः ॥

शिवरहस्ये ।

पवित्रारोपणं शम्भोः कुर्य्यान्नभसि वा शुचौ ।
चतुर्द्दश्यामथाष्टम्यामधिवास्य विधानतः ॥
श्रावणे प्रौष्ठपद्यां वा पवित्रारोपणन्तु यः ।
कुरुते नापवित्रं[१] स्यात्तस्य संवत्सरान्तरा ।
शम्भोः पवित्रमारोप्य रिक्तः सम्पूर्णतामियात् ॥
पवित्रात्तु पवित्रन्तु सान्वयं भृगुनन्दन ।
अपवित्रं पवित्रं स्यादैहिकर्माखिलं नृणाम् ॥

कालोत्तरे ।

पूजां कृत्वा प्रकर्त्तव्यं नित्यमेव पवित्रकम् ।
अथवा नियमेनैव कुर्य्यान्मासचयान्तरे ॥
आषाढ़ान्ते चतुर्द्दश्यां नभस्य-नभसोस्तथा ।
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोः समम् ।
पवित्रारोपणं कार्य्यं न तु कालान्तरे स्थितम् ॥

---

(१) अपवित्रमिति भावप्रधानोनिर्द्देशः अपवित्रत्वमित्यर्थः ।

एवं काले ह्यतिक्रान्ते प्रायश्चित्तं समाचरेत् ।
भौतिकानां विशेषेण शुक्लपक्षे ह्ययं विधिः ॥

'आषाढ़ान्ते चतुर्द्दश्यामिति पौर्णमास्यां चान्द्रमासविवक्षया आषाढ़शुक्लचतुर्द्दश्यामित्यर्थः ।

तथाच मोहचौरोत्तरे ।

आषाढ़स्य तथादिष्टा श्रावणस्य सितासिता ।
सप्तम्याञ्च त्रयोदश्यां तत्र गन्धपवित्रकम् ॥
त्रयोदश्यां प्रकर्त्तव्यं पवित्रं गन्धसंज्ञितम् ।
पवित्रमथ भूतायामाषाढ़नियमः स्मृतः ॥

एवं सत्यपि विष्णुस्वापाभावे न कर्त्तव्यम्, किन्तु विष्णुस्वापानन्तरमेव कर्त्तव्यम् ।

उक्तञ्च ।

आषाढ़ेऽपि न कर्त्तव्यमसुप्ते मधुसूदने ।
कालोऽप्यनियतस्तत्र श्रूयतां विधिनिर्णयः ॥
शुक्लाषाढ़चतुर्द्दश्यां कुर्य्याच्छ्रावण-भाद्रयोः ।
अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि ॥

नन्वाषाढ़चतुर्द्दश्यामित्यनेनैव[1] विष्णुस्वापानन्तरकालः स्वयमेव लभ्यते, तत्र किमिति प्रसुप्त एव मधुसूदन इति । सत्यम् । किन्तु आषाढ़स्तावद्द्विविधश्चान्द्रः सौरश्चेति तत्र चान्द्रे सर्वकालं स्वपिति पुनरधिकमासे सौरमासिककर्कटसङ्क्रान्तावेव विष्णुः स्वपितीत्येतदुक्तमिति न दोषः ।

(१) न चाषाढ़चतुर्द्दश्यामित्यनेनैवेति ख० ।

उक्तञ्च ज्योतिःशास्त्रे।

मिथुनस्थोयदा भानुरमावास्याद्वयं स्पृशेत्।

द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥ इति।

तथा।

दर्शद्वयमतिक्रम्य यदा सङ्क्रमते रविः।

अधिमासः स विज्ञेयः सर्वकर्मबहिष्कृतः॥

इति वचनाच्च। पूर्वाषाढ़े पवित्रं न कुर्व्वीतेत्यभिप्रायः। यदा तु चैत्रादिषट्सु मासेष्वन्यतमस्मिन्नधिकमासे द्विराषाढ़ः स्यात्तदा श्रावणे विष्णुस्वापः।

तथाच ज्योतिःशास्त्रे।

माधवादिषु षट्सु एकमासे दर्शद्वयं तदा द्विराषाढ़स्तदापि स्याच्चैत्रे श्रावणे व्यूढ़ः, अतस्तदा श्रावणादौ पवित्रारोपणं परं कार्य्यम्।

उक्तञ्च मोहचौरोत्तरे।

दीक्षादिस्थापनान्तञ्च पवित्रादि व्रतक्रतोः।

पवित्रादि न कुर्व्वीत यदिच्छेच्छुभमात्मनः॥

दर्शद्वयं भवेद्यत्र रविसङ्क्रान्तिवर्जितम्।

अधिमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

तुल्यमासेऽधिमासे च कर्त्तव्यन्तु पवित्रकम्।

सुप्ते चैव हृषीकेशे दोषभागन्यथा भवेत्॥

ननु किं चान्द्रमासेन सौर एव ग्राह्यो भवेत् तत्राधिकमासस्य शङ्कास्ति, नैवं। प्रायेण पवित्रारोपणे चान्द्र एव मासोऽभिमतो न तु सौरः, कन्यागते रवौ प्रायश्चित्ताभिधानात्।

आषाढ़ादिषु मासेषु सुप्त एव जनार्द्दने ।
शुक्लपक्षेऽथवा कृष्णे प्रशस्ता सूत्ररोहणे ॥
रोगाभिवृद्धिसंयुक्तः प्रवासी राजपीड़ितः ।
उक्तमासत्रये यस्तु न कुर्यात् सूत्ररोहणम् ।
असौ कन्यागते भानौ यथा दक्षाणुना युतम् ॥

'दक्षाणुना' अघोरमन्त्रेण ।

कुर्यात् पवित्रकं शम्भोस्तुलायां न कथञ्चन ।
मलिम्लुचं परित्यज्य सर्वकर्मसु गर्हितम् ॥

कारणे ।

आषाढ़ादिचतुर्मासास्तदन्यानि विवर्जयेत् ।
कर्त्तव्यं पक्षयोः शुक्ल-कृष्णयोरुभयोरपि ।
चतुर्द्दश्यामथाष्टम्यां रोपयेत्तु पवित्रकम् ॥

रत्नावल्यां ।

यदा त्वेकदिने शम्भोः पवित्राद्यं चिकीर्षति ।
कृतनित्यस्तदा सन्ध्यां कृत्वा नैमित्तिकीं सकृत् ॥
सम्यग्गन्धाद्यकं कृत्वा पवित्रं पूजयेन्नरः ।
यदा खण्डतिथिस्तत्र तदा तत्तिथिभागयोः ॥

यदा चतुर्दशी पौर्णमास्यर्द्धसम्मिश्रा तदा कालान्तरे ऽभिहितम् ।

यदा तत्रैव कर्त्तव्यं यदि व्यग्रतया तदा ।
गोदोहान्तरितं कृत्वा साधिवासं पवित्रकम् ।
चतुर्द्दशीक्षणे कुर्य्याच्छेषं शेषतिथौ चरेत् ॥

सप्तम्यां वा त्रयोदश्यां कृत्वा गन्धपवित्रकम् ।
अष्टम्याञ्च चतुर्दश्यां कुर्य्यात् पवित्रकं तथा ॥
अपरेऽहनि कर्त्तव्यं सुपवित्रमिति स्थितिः ।
अथ द्वाभ्यां दिनैकेन कर्त्तव्यञ्चापरे जगुः ॥
अधिमासत्रयोदश्यामपरेऽह्नि विधिद्वयम् ।
गोदोहान्तरितं कृत्वा यदि स्यात् व्यग्रमानसः ॥
चतुर्दशीक्षणे कुर्यात् साधिवासं पवित्रकम् ।
सुपवित्रं पौर्णमास्यां तिथिभेदे त्वयं विधिः ।
अष्टम्यामपि बोद्धव्यः क्रमोऽयं सूत्ररोपणे ॥

इति शैवपवित्रारोपणकालः ।

---

## अथ विष्णुपवित्रारोपणकालः ।

तत्र पवित्रारोपणं काम्यं नित्यञ्च ।

तत्र विष्णुरहस्ये ।

पवित्रारोपणं विष्णोर्भुक्ति-मुक्तिप्रदायकम् ।
स्त्रीपुंकीर्त्तिप्रदं पुण्यं सुखसम्पद्धनावहम् ॥
पुण्यानान्तु तथा पुण्यं सर्व्वपापहरन्तु वै ।
पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥
संवत्सरे नरो भक्त्या समभ्यर्च्य जनार्द्दनम् ।
यत्फलं समवाप्नोति पवित्रारोपणेन तत् ॥
न करोति विधानेन पवित्रारोपणन्तु यः ।

तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ॥
तस्माद्भक्तिसमायुक्तैर्नरै-र्विष्णुपरायणैः ।
वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं हरेः ॥

मन्त्रप्रकाशे तु ।

पवित्रारोपणं वक्ष्ये सर्वपूजाफलप्रदम् ।
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ।
विधिना शास्त्रदृष्टेन यो न कुर्यात् पवित्रकम् ॥
वर्षे वर्षे ततः कार्य्यं विधिदृष्टेन वर्त्मना ।
भक्त्या परमया युक्तो हरिप्रीत्यै पवित्रकम् ॥

तस्मादावश्यकं पवित्रारोपणकर्म्म आसाद्य कामनानुसारेणायुरादीन्यपि फलानि भवन्तीति द्रष्टव्यम् ।

विष्णुरहस्ये ।

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
सिंहस्थे वा रवौ कार्य्यं कन्यायान्तु गतेऽथवा ।
तस्यामेव तिथौ सम्यक् तुलास्थे न कथञ्चन ॥

तथा ।

शरद्वर्षासु कुर्वीत पवित्रारोपणं शुभम् ।
द्वादश्यां श्रवणे चापि पञ्चम्यामथवा द्विज ।
अनुक्तैश्चैव कर्त्तव्यं चतुर्द्दश्यामथापि वा ॥

मन्त्रतन्त्रप्रकाशे ।

कर्कटकगते सूर्य्ये तथा सिंहगतेऽपि वा ।

द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात् पवित्रकम् ॥
अथ चेद्विघ्नयोगेन मुख्यकालो न लभ्यते ।
कन्यास्थापि प्रकुर्वीत यावन्नोत्तिष्ठते हरिः ॥

सात्त्वतसंहितायाम् ।

तस्य मासचतुष्कस्य मध्ये कुर्याच्छुभे दिने ।
आषाढ़ीपञ्चदश्यास्तु यावद्वै कार्त्तिकस्य च ॥

सम्पूर्णचन्द्रदिवसं इति ।

आकर्कोटकसङ्क्रान्तेस्तुलाभोगक्षयावधि ।
कालान्तमस्य पक्षस्य सौरं मध्यमसंज्ञितम् ॥
एकादश्यास्तदन्तोयश्चातुर्मास्योपलक्षितम् ।
कालान्तं वैष्णवं विद्धि उत्तमं सर्वसिद्धिदम् ॥
अप्राप्तेरस्य कालस्य त्वन्तरायेण केनचित् ।
निर्वाहणीयोऽप्यपरः कालश्चान्द्रमसादिना ।
सम्पादयेच्चतुर्मध्ये विधिवद्योगपूर्वकम् ॥

इति विष्णुपवित्रारोपणकालः ।

---

## अथ नानादेवतापवित्रारोपणकालः ।

तत्र मासा वैष्णवोक्ता एव तिथिषु विशेषः ।

तत्त्वसागरसंहितायाम् ।

प्रतिपद्धनदस्योक्ता द्वितीया च श्रिया मता ।
तृतीया पार्वतीदेव्याश्चतुर्थी विघ्नहारिणः ॥

पञ्चमी शशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु ।
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी मता ॥
मातृणां नवमी प्रोक्ता वासवे[१] दशमी स्मृता ।
एकादशी मुनीनाञ्च द्वादशी चक्रपाणिनः ॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी ।
पौर्णमासी सुरश्रेष्ठ पितुर्मे कथिता तिथिः ॥
देव्यास्त्रिपुरभैरव्याः कथिता तु चतुर्थिका ।
अन्यासामपि नित्यानामष्टमी नवमी स्मृता ॥
तिथयस्ते समाख्याताः पवित्रारोपणे शुभाः ।
पञ्चम्यादिवह्निन्द्र नित्यत्वेन समर्चयेत् ॥
पवित्रारोपणं तस्य पृथङ्मुख्यतयेरितम् ।
भवेत् द्रव्यस्य सम्पत्त्यै देशस्यापि तथा भवेत् ॥
यच्च मुख्यतया देव प्रोक्तं तत्तत्तिथौ भवेत् ।
इति कालः समाख्यातः शृणु सूत्रं सुराधिप ॥

विष्णुरहस्ये ।

तिथयः सूत्रविख्याताः पृथगुक्तास्तपोधनाः ।
प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः ॥
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः ।
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य तु ॥
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य तु ।
सप्तमी भास्करे प्रोक्ता दुर्गायाश्चाष्टमी स्मृता ॥

---

(१) वासुकेर्दशमी स्मृतेति ख० ।

मातॄणां नवमी प्रोक्ता दशमी वासुकेः स्मृता ।
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः ॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी ।
अमा देव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता ॥
यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य तु ।
सर्व्वेषामेव देवानां कार्य्यन्तासु यथाविधि ॥

तथाच कालोत्तरे ।

विशेषेणोच्यते[१] वत्स प्रतिपत्प्रभृतिक्रमात् ।
वह्नेस्तु ब्रह्मणो गौर्य्या गणेशादिषु पञ्चमी ॥
षण्मुखस्य तु सूर्य्यस्य शिवस्याप्यष्टमी हिता ।
अम्बिकायाः कृतान्तस्य रुद्रायाश्चक्रपाणिनः ॥
कामस्य च त्रयोदश्यां चतुर्दश्यां शिवस्य च ।
पितॄणाञ्चैव पूर्णायां गुरुयोगश्च कारयेत् ॥
चतुर्दश्याममयाष्टम्यां पर्व्व साधारणं हितम् ॥

देवीपुराणे देवीमधिकृत्य ।

अथवाषाढ़मासे तु श्रावणे वापि कारयेत् ।
सप्तम्यां वा त्रयोदश्यामधिवासं सुराधिप ॥
इति नानादेवतापवित्रारोपणकालः ।

---

## अथ दमनकारोपणकालः ।

देवीपुराणे ब्रह्मोवाच ।

चैत्रादौ कारयेत् पूजां मम वत्स यथाविधि ।

(१) विशेषेणोत्तरे इति ख० ।

गन्धधूपार्चनादानैर्मालाभिर्दमनोद्भवैः ॥
सहोमं पूजयेद्देवं सर्वकामानवाप्नुयात् ।
सर्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥
उमां शिवं हुताशञ्च द्वितीयायान्तु पूजयेत् ।
हविष्यमन्नं नैवेद्यं देयं गन्धार्चनं पुनः ।
फलमाप्नोति विप्रेन्द्र उमया यत् प्रभाषितम् ॥
पञ्चम्यां पूजयेन्नागाननन्ताद्यान् महोरगान् ।
क्षीरं सर्पिश्च नैवेद्यं देयं सर्वविषापहम् ॥
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्वोपहारिकी ।
इहैव सुखसौभाग्यमन्ते स्कन्दपदं व्रजेत् ॥
दशम्यां धर्मराजस्य पूजा कार्य्यातिगन्धिकी ।
विगतारिर्निरातङ्क इह चान्ते परं पदम् ॥
एकादश्यामृषेः पूजा कार्य्या सर्वोपहारिकी ।
धनवान् पुत्रवान् कान्त ऋषिलोके महीयते ॥
कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि ।
रतिप्रीतिसमायुक्तमशोकमणिभूषितम् ॥
कुम्भे वा सितवस्त्रे वा लेख्यपात्रे फलादिभिः ॥
पौर्णमास्यां तथा कार्य्या सर्वकामसमृद्धये ॥
इन्द्राय सहशिष्याय कायिकं लभते फलम् ।
खण्डमिष्टं प्रयच्छेद् यः सौभाग्यमतुलं लभेत् ॥

इति दमनकारोपणकालः ।

---

## अथ मासविशेषेण पुष्पविशेषाः।

आषाढ़े बिल्व-कह्लारैरीप्सितं लभते फलम्।
नवमल्लिकया पूजा नभोमासि महाफला॥
कदम्बैश्चम्पकैरेवं नभस्ये सर्वकामदा।
आश्विने पङ्कजैः शम्भोर्मालत्या पूजनं शुभम्॥
ईप्सितं लभते सर्वं सर्वकामफलप्रदम्।
माघ-फाल्गुनयोः पुष्पैः पूजनं कुन्द-मुद्गरैः।
चैत्रे दमनकैश्चापि पूजनं शतपत्रकैः॥
चन्दनैः कुसुमैर्वापि पूजनाच्च जगद्गुरोः।
पूर्णे संवत्सरे मर्त्यस्त्रिदशैः समतां व्रजेत्॥

भविष्यत्पुराणे।

पूजा चम्पक मालत्या इषेऽभ्युदयदायनी।

'इषे' आश्विने।

शतपत्रिकया पूजा कार्त्तिके सार्वकामिकी।
मार्गे नीलोत्पलैः पूजा पुष्यैः स्यात् कुजकैः शुभा॥
माघेऽथ कुन्दकुसुमैर्मरुवक्केन फाल्गुने।
शतपत्रैस्तथा चैत्रे यः कुर्य्यात्सुरसत्तम।
लभते सर्वयज्ञानां सर्वदानफलं तथा॥

इति मासविशेषेण पुष्पविशेषाः।

---

## अथ रात्र्यादिभेदेन पुष्पभेदाः।

कनकानि कदम्बानि रात्रौ देयानि शङ्करे।

दिवाशेषाणि देयानि दिवारात्रौ च मल्लिकाः ।
प्रहरन्तिष्ठते जाती करवीरमहर्निशम् ॥

प्रहरमहर्निशं वा पूजायां स्नापनानन्तरमुत्तारणीयमित्यर्थः ।

कामिकाकारणयोः[१] ।

नन्द्यावर्त्तं श्रियावर्त्तं श्वेतार्कं श्वेतपुष्पकम् ।
पुन्नागं पद्मिकं षोढ़ं मालतीमुदये ददेत् ॥
पङ्कजं वृहतीं व्याघ्रीं व्याघातं करवीरकम् ।
उत्पलं पाटलीं द्रोणं मध्याह्ने तु प्रदापयेत् ॥
चम्पकं वेदकं भद्रां धुस्तूरं वरकर्णिकाम् ।
मालतीं मल्लिकाञ्चैव दापयेत्तु प्रदोषके ॥
जातीं नीलोत्पलञ्चैव पुष्पं कुन्दं कदम्बकम् ।
दिवर्णञ्चैव भद्रञ्च अर्द्धयामे प्रदापयेत् ॥
नीलोत्पलसमं पुष्पं न भूतं न भविष्यति ।
कदम्बं जनकं जाती देयं स्यादार्धरात्रके ।
अन्यपुष्पाणि सर्वाणि अन्यसन्ध्यासु दापयेत् ॥

इति रात्र्यादिभेदेन पुष्पभेदाः ।

---

## अथ सार्वकालपुष्पाणि ।

विल्वपुष्पं शमीपुष्पं करवीरञ्च मालती ।
उन्मत्तकं चम्पकञ्च सद्यः प्रीतिकरं मम ॥
चम्पकाशोक-पुन्नागाः सकल्हारास्तथा मम ।

---

(१) कामिककारणयोरिति ख० ।

इत्थंदा द्विजशार्दूल ये चान्ये बहुगन्धिनः ।
एतैर्हि पूजितो नित्यं प्रीतिं शीघ्रं व्रजाम्यहम् ॥
यैः कैर्वापीह कुसुमैर्जल-स्थलरुहैः शिवम् ।
संपूज्य प्रोषितो भक्त्या शिवलोके महीयते ॥

इति कालविशेषेण शिवपुष्पविशेषपूजनम् ।

---

## अथ पुष्पादीनामभावे पत्रादिभिः पूजा कार्य्येऽति-निरूप्यते ।

स्कन्दपुराणे ।

अभावे पुष्पपत्राणामन्नाद्येनापि पूजयेत् ।
शालितण्डुलगोधूमैर्यवैर्वापि समर्चयेत् ।
गाणपत्यमवाप्नोति रुद्रलोके वसेच्चिरम् ॥

भविष्यपुराणे ।

अभावेन हि[१] पुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यभावे तु फलान्यपि निवेदयेत् ॥
फलानामप्यभावे तु तृणगुल्मौषधीस्तदा ।
औषधीनामभावे तु भक्त्या भवति पूजितः ॥

इति पुष्पाद्यभावे पत्रादीनां पूजासाधनत्वं निरूपितम् ।

---

(१) अभावेनेत्यत्र विशेषणे तृतीया, पुष्पाभावविशिष्टः सन्नित्यर्थः ।

## अथ सामान्यतः क्षुद्रकर्मकालः ।

नारायणीये ।

कुलिकः स्थविरो योगस्तारा वैनाशिकः कुजः ।
अष्टमोराशिरित्याद्याः कालाः स्युः क्षुद्रकर्मणीति ॥

कुलिकस्तावत् शनैश्चराद्यादयः अष्टौ दिनाधिपमुख्योदयिनो दिवा सायं वा परार्द्धमुदितं कुलिकोदयाख्यम्[१] । प्रपञ्चितश्चायं विषहरप्रकरणे ।

स्थविरोनाम

गुरुरव्यंशके चेचे तयोरेव दिनं यदि ।
तद्दिने स्थांशके रिक्ते रोगर्णादिप्रतिक्रिया ॥

ताराश्च

तिस्रश्च पूर्वा भरणी मघा च
पञ्चोग्रवीर्याणि वदन्ति तज्ज्ञाः ।
रौद्रेन्द्र-मूलो-रग-दैवतानि
क्रूराणि तेषूग्रपरिग्रहः स्यात् ॥
वैनाशिकं त्रयोविंशं वराहमिहिरोदितम् ।
द्वाविंशकन्तु मन्दाद्यैरष्टाशीत्येकशन्दिनम् ॥

'कुजः' अङ्गारकदिनम्, 'अष्टमोराशिः' उत्पत्तिकाले यस्मिन् राशौ चन्द्रो वर्त्तते तस्यैवाष्टमो राशिकालः। आदिशब्देन कला-तिथिवेलाग्रहणम्। तत्र कला नाम शुक्लपक्षे चन्द्रकला वर्द्धन्ते क्षीयन्ते च कृष्णपक्षे तत्रापि क्षयकालेऽष्टमीमारभ्यामावास्यापर्यन्तं

(१) पाठोऽयं आदर्शसम्मत एव मुद्रितः परन्त्वयं न समीचीनः ।

कुर्य्यात्। 'तिथयः' चतुर्थ्यादयः, चन्द्रोदयमारभ्य पञ्चदशघटिकापर्यन्तं समुद्रस्य क्षोभो भवति सा चन्द्रवेला, नाम तदा स्नानादिकर्म न कुर्य्यात्। तदारभ्य पुनः पञ्चदशघटिकापर्यन्तं वेला नास्ति, तदा स्नानं कुर्य्यात्।

इति सामान्यतः क्षुद्रकर्मकालः।

## अथ वश्यादिकर्मविशेषेण कालविशेषः कथ्यते।

मन्त्रतन्त्रप्रकाशे।

शिशिरादिऋतुज्ञानं कर्माङ्गं तच्च कथ्यते।
आचार्य्यैः कथितं पूर्वैः कर्मणां सिद्धिकारणम्॥
दिनादियामिनीप्रान्ते ऋतवः षड्व्यवस्थिताः।
शिशिराद्याः समारभ्य नाडीर्दश दश क्रमात्॥
आरक्तधवलो बालः शिशिरो वश्यकर्मणि।
उच्चाटनेऽथ विज्ञेयो वसन्तो लोहितो युवा॥
ग्रीष्मो धूम्रशरीरश्च मारणे स नियुज्यते।
प्रावृट् धूम्रशरीरा तु स्तम्भने सा नियोजिता॥
शरत् कृष्णा मताकृष्टौ मन्त्रज्ञैर्गुरुपूजकैः।
हेमन्तो धवलो वृद्धः शान्तिवश्यादिकर्मकृत्॥

मन्त्रतन्त्रे।

श्रीकामस्तु जपेत्काले मन्त्रं पूर्वाह्णिकेऽथवा।
नृह्ममारस्तुतजपं काले पूर्वाह्णिकेऽथवा॥
तथा काले च पूर्वाह्णे वश्यार्थी प्रजपेन्मनुम्।
आकर्षणे निशि प्रोक्तं यामात् पूर्वन्तु तत् द्विजैः॥

मन्त्रतन्त्रप्रकाशे।

पूर्वाह्णे शुभदं कर्म शाह्णे वापि निगद्यते।
लक्ष्मीसारस्वतं नाम आकृष्टिः शान्तिकं तथा।
आयुषो वर्द्धनञ्चेति षट्शुभानि प्रचक्षते॥

मन्त्रतन्त्रे।

प्रदोषो बुद्धिनाशाय स्तम्भनञ्चापराह्णिकम्।
विद्वेषाय जपेन्मन्त्रं मध्याह्ने तु ज्वराय च॥
उच्चाटनार्थाय जपेन्मध्याह्नात् परतो मनुम्।
मारणं तु प्रकर्त्तव्यं यामादूर्द्धं तृतीयकात्॥

इति वश्यावश्यादिकर्मविशेषेण कालविशेषः।

---

## अथ विष्णुशयनादिकालनिर्णयः।

तत्र भविष्यत्पुराणे।

आभाकासितपक्षेषु मैत्र-श्रवण-रेवती-।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवः॥

नारदीये।

मैत्राद्यपादे स्वपितीह विष्णुः
श्रुतेश्च मध्ये परिवर्त्तमेति।
पौष्णावसानेन सुरादिहन्ता
प्रबुध्यते मासचतुष्टयेन॥

अल्पकाद्येषु मासेषु मधुरे माधवस्य च।

द्वादश्यां शुक्लपक्षे च प्रस्वापावर्त्तनोत्सवः ॥
पौष्णपौषे यदा नास्ति मैत्राद्यमपि नोनिशि ।
द्वादश्यामपि नो कुर्यात् उत्थानं शयनं हरेः ॥

द्वादश्यां तथा कुर्यादिति पठित्वा ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यच पादयोगेऽपि द्वादश्यामेव कारयेत् ॥

विष्णुधर्मोत्तरे ।

विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥

पुराणात् ।

उत्थाने शयने चैव तथा पार्श्वविवर्त्तने ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥

वाराहपुराणे ।

न पादनियमस्तत्र स्वापे वा परिवर्त्तने ।
पादयोगो यदा तस्य ऋक्षेणापि तदा भवेत् ॥

मत्स्यपुराणे ।

रेवतीऋक्षपर्यन्तं मेषचन्द्रावलोकिते ।
उत्तिष्ठन्तं हृषीकेशं योगनिद्रा विमुञ्चति ॥
रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥
रेवत्यादिरयान्तो वा द्वादश्या च विना भवेत् ।
उभयोरप्यभावे तु सन्ध्यायां तु महोत्सवः ॥

पुराणात्।

रेवत्यन्तो यदा रात्रौ प्राप्ते नारायणोत्सवे।

पादयोगमनादृत्य ऋच एव प्रवर्त्तते॥

रेवत्यन्तो यदा रात्रौ गतः पादान्तरेऽपि च।

अपराह्णे तदा विष्णुर्योगनिद्रां व्यपोहति॥

रेवत्यन्तो यदा रात्रौ द्वादश्या च विना भवेत्।

उभयोरप्यभावः स्यात् सन्ध्यायां तु महोत्सवः॥

वाराहपुराणे।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।

आभाकासितपक्षेषु शयनावर्त्तनादिकम्॥

अयमर्थः।

हरिशयनादौ शुक्ला द्वादशी आषाढ़-भाद्रपद-कार्त्तिकानामनुराधा-श्रवण-रेवतीनाम् आदिमध्यान्तपादयुक्ता रात्रिसन्ध्या दिवाक्षणयुक्ता च प्रशस्ता, यदा तु यथोपदर्शितकाले पादयोगो न प्राप्यते तदा द्वादशीनक्षत्रयोग आदरणीयात्[१]। पादयोरुभयोरुत्सवेन चायं विशेषः। दिवा रेवती-द्वादशीयोगे रात्रिगामिनि नक्षत्रे शेषदिनान्ते विष्णोरुत्थानं यदा तु रेवत्या विना द्वादशी तदा द्वादशीसन्ध्यायामुत्थानादिकं भवति।

तदुक्तं।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।

आभाकासितपक्षेषु शयनावर्त्तनादिकमिति॥

---

(१) आदरणीय इत्ययं पाठो युक्तः।

अत्र केचिदाहुः ।

यदि मैत्रादीनि नक्षत्राणि द्वादशीं विहाय त्रयोदश्यां भवन्ति तदा चतुर्दश्यां तदनन्तराणि ज्येष्ठादीनि ततः पौर्णमास्यां तदनन्तराणि मूलादीनि, तथा सति आषाढ़ इति विरुध्येत तत्र नक्षत्रयुक्ता पौर्णमासी सन्धिज्येष्ठादिशक्तेः भाद्रपदमासस्य यथाकथञ्चित् प्राप्यते, "आद्योपान्तौ त्रिभौ ज्ञेयौ फाल्गुनस्य त्रिभो मतः । शेषा मासा द्विभा ज्ञेयाः"॥ इति वचनात् । न धनिष्ठा ज्येष्ठादौ हरिशयनादि भविष्यति ।

यदुक्तं विष्णुधर्मोत्तरे ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति ॥

आचारसारे तु "द्वादश्यामृक्षसङ्गमादिति पठितम् । तेनान्यतिथिगतमैत्रादौ पादसम्बन्धे कटद्वादश्यां सन्धिसमये शयनादिक्रिया ।

अत्र श्रीकरः प्राह[१] यदा गतकाले अमावस्यादयं भवति तदा मिथुनादितरेष्वाषाढ़ीभावात् सुप्तचन्द्रसूर्य्ये ग्रहवारशयनरेवत्यादयो यदि वा चतुर्दश्यां भवन्ति तदापि सङ्करयोः सहोत्थानविलोकप्रसिद्धेस्तत्र दुर्लङ्घनम् । तदा[२] वृश्चिके नक्षत्रप्राप्तावुत्सवे क्रियमाणे पञ्चममासप्राप्तौ "प्रबुध्यते मासचतुष्टयेनेत्यस्यानुपपत्तेः पादयोगादन्यथात्यय एव कल्प्यत्वादनादरणीयः । द्वादश्यां सन्धिसमय इति तु माथुरकल्पाश्रयणेनोक्तम् । दिवा हि वैष्णवाना-

(१) श्रीकरमतं आदर्शसम्मतमेव मुद्रितं परन्त्विदमादर्शदोषेणात्यन्तापरिशुद्धमिति । (२) तत्रेति गचिह्नितपुस्तके पाठः ।

मनुष्ठानं कल्पः माथुरस्य तदितरतस्य तत्। माथुरो द्वादशी-पुरस्कारेण नक्षत्रसम्बन्धप्रेक्षणेन च इति तु नक्षत्रपादयोगपुर-स्कारेण द्वादश्यपेक्षावशेन च तिथिनक्षत्रमेलनं च पक्षद्वये प्रशस्तं तेन वैदिकशाखाविकल्पन्यायेनोपपत्तिः। तदायं तिथि-नक्षत्रवशे-नानुष्ठानविकल्पः। कथं तर्हि हरिशङ्करयोः सहोत्थानेत्यस्य नान्या-तिथिरस्ति तस्मात् सर्वमनाकुलमिति। अत्र पण्डितपरितोषकृता दूषणमभिहितं अनुपपन्नमेतत्, तथा हि पादयोगादन्यतिथौ द्वाद-श्यामृक्षयोग इत्यस्य कोऽर्थः, द्वादश्या अन्या एकादशी त्रयोदशी एकादशी-द्वादशीतुल्यौ च न तस्या नक्षत्रसंयोग-पादयोगादरः। तदुक्तं विष्णुधर्मोत्तरे।

एकादश्यां द्वादश्यां च नित्यं सन्निहितो हरिः।

तत्र नक्षत्रसंयोगे पादयोगो न कारणमिति॥

अथ त्रयोदश्यामिति वक्तव्यं तथासत्याभाका इति विरुध्यते। न च कार्त्तिकशब्दोमासचतुष्टयप्रबोधनानुरोधेन प्रायिकः "आभाका-इत्यक्षरे बङ्गायामप्रसिद्धस्य नियतत्वान्मासचतुष्टयेनेत्यस्यैव प्रायि-कानुवादत्वं युज्यते। तथा च कार्त्तिकोदयप्राप्तावुत्तरमासाश्रय-णेन कार्त्तिक एव विष्णुप्रबोधे सत्यपि मिथुनादित्ये स्वपने अधि-मासे सति पौर्णमासीदयस्य सम्भवात्। पञ्चभिरपि मासैरुत्थानं न विरुध्यते। षष्ठ्यापि दिवसैर्मास इति चतुःसंख्योपपत्तिः, दिराषाढे विवेचकं दर्शयिष्यामः। न च हरि-शङ्करयोः सहोत्थानमिति लोक-प्रसिद्धिर्नियामिका, तस्याः शास्त्रप्रसिद्धितो दौर्बल्यात्। किञ्चैवं-वादिना शयने किं वाच्यं यदानुरोधात्कालप्रमाणं वृषादित्ये भवति

तदा किं तत्रैव हरिशयनं उताषाढ़ अपेक्षणीयः। तत्रापि चतुर्द्दश्यां नक्षत्रप्राप्तौ हरि-शङ्करयोः सहोत्थानमिति लोकप्रसिद्धिर्नियामिका, तस्याः शास्त्रं किं लोको न जल्पति, मिथुनादित्ये वा चतुर्द्दश्यामनुराधाप्राप्तौ तत्राषाढ़शुक्लपौर्णमासीलक्षितमासापेक्षितत्योत्थाने कथा युक्तापि कृता तस्माच्छयनादावाषाढ़प्रतिनियमात् ज्येष्ठादौ नक्षत्रलाभेऽपि शयनादिनिमित्तकरणं तदाधिमासपातावश्यंभावात् द्विराषाढ़कल्पनमाश्रित्य तदनुष्ठानानन्तरव्यतिरेकेण तथाविधनक्षत्रप्राधान्यानुपपत्तेः अथापि भवति तथापि आभाकादित्यस्यावश्यादरणीयत्वं। किञ्चैवंवादिना आश्विनेऽपि लोकप्रसिद्धिं पुरस्कृत्य देवोत्थापनमभिदधता स्वयं लिखितमपि प्रस्तुतं यस्यापि दिवसैर्मासो भवतीति तस्मादन्यथा वर्णनीयम्।

तत्र यदुक्तम्।

निशि स्वापोदिवोत्थानं सन्ध्यायां परिवर्त्तनम्।
पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति॥

तस्यायमर्थः।

पादयोगादन्यस्यां त्रयोदश्यामपि पादयोगे सन्ध्यायां परिवर्त्तनम्। द्वादश्यां नक्षत्रयोगे सति निशि स्वापोदिवोत्थानं भवति। न पुनरुत्सवादिकमप्यन्यतिथौ नक्षत्रपादयोगादेवं सति आभाकादिति मासचतुष्टयेनेति च द्वयमुपपद्यते, एवञ्चैकादश्यामपि नक्षत्रयोगे वचनान्तरबलेन शयनाद्याचरणीयम्। यत्तु "द्वादश्यामेव तत् कुर्य्यादिति, तन्माथुरकल्पाश्रयणेन, यदि द्वादशीं विहाय एकादश्यां नक्षत्रलाभः तथापि द्वादशीसन्धिसमय एव शयनादिकमनुष्ठेयम्।

यद्येकादश्यां नक्षत्रयोगो यदि वा त्रयोदश्यां सर्वत्राभावप्राप्तौ द्वादश्यां सन्धिक्षणे शयनादिकं सन्ध्यायाश्च रात्रि-दिवसोभयात्मकत्वात् "निशि स्वापोदिवोत्थानमित्यपि नात्यन्तं विरुध्यत इति स एव मधुरमाधवकल्पेन नक्षत्रफलमस्तु एकादश्यां वा नक्षत्रप्राप्तौ प्रशस्ततमत्वेनान्यतरानुष्ठानं त्रयोदश्यां वापि कार्त्तिकाविरोधेनेत्युक्तमिति, तदेतदयुक्तं, "निशि स्वापोदिवोत्थानमिति वाक्ये भवदुक्तार्थस्वीकारे व्यवहितसम्बन्धप्रसङ्गात् अस्यार्थस्य वचनादप्रतीतेः तन्मासानामन्तराधिमासनिपाते तुला-वृश्चिकयोर्विकल्पेन दिवोत्थापनविधायकवचनस्य वक्ष्यमाणत्वात् । तदभिप्रायेणास्य वचनस्यार्जवेनोपपत्तेर्न भवदुक्तार्थस्वीकारे कारणमस्ति । तेन श्रीकराणां मतमेव साधु । कार्त्तिकशब्दश्च मुख्य एवाविकल्पाभिप्रायेणोपपद्यते । यच्च कार्त्तिकस्याधिमासत्वे शुद्धकार्त्तिक एव विष्णुप्रबोध इत्युक्तं तदपि विकल्पस्य वक्ष्यमाणत्वादयुक्तम् । तस्माद्यथोक्तमेव साधीयः ।

भविष्योत्तरे ।

प्राप्ते भाद्रपदे मासि एकादश्यां शुभे दिने ।
कटदानं भवेद्विष्णोर्महापातकनाशनम् ॥

'कटदानं' शयानस्य विष्णोरङ्गपरिवृत्तिकरणम् ।

तथा ।

कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः ।
मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विजः ॥

वाराहपुराणे ।

इयन्तु द्वादशी देव प्रबोधार्थन्तु निर्मिता ।

त्वयैषा सर्व्वलोकानां हितार्थं शेषशायिना ॥

एवमन्येषामपि देवानां स्वीयस्वीयतिथिवशेन नक्षत्रवशेन च शयनाद्याचरणीयमिति ।

तदुक्तं मत्स्यपुराणे ।

यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या ।

तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकमिति ॥

केचित्तिथिवशेन केचिन्नक्षत्रवशेन सर्व्वेषां शयनादिकमाचरन्ति। प्रतिपदादिपञ्चदशतिथयोधनदादीनां देवानां, तत्रैकैव तिथिरनेकदेवताका यथा प्रतिपदग्नेर्ब्रह्मणश्च धनदस्य च। तत्रानुष्ठानविकल्प एवान्याय्यः सप्तविंशतिनक्षत्राण्यपि तत्तद्देव व्यापीनीति गाणपत्यादीनां नक्षत्रवशेन च शयनादिकमाचरणीयम् । नक्षत्रतिथिमेलनं च रुद्रादीनां शयनादावाषाढ़ादौ नोत्सवः, न हि कदाचिच्चतुर्दश्यामावास्यां रौद्रमार्द्रानक्षत्रं सम्भवति। एवमन्यत्रापि द्रष्टव्यम् । तस्मात्तिथिवशेनैव तेषां शयनादिकं विदेशे तु नक्षत्रवशेनापीति ।

पूर्व्वेद्युरुपवासः स्यात् पूर्व्वाह्णे स्वापबोधयोः ।

अपराह्णे यदा तौ तु तदहर्नियमं विदुः ॥

पूर्व्वाह्णमारभ्य रात्रिविशेष एव पूर्व्वाह्ण एवेत्युच्यते दिवास्वापस्य निषेधात् । एवमेव च रात्रावुदयमाने तु गरुड़ध्वजे पूर्व्वेद्युरुपवासः स्यादपरेद्युर्धर्ममाचरेत् इति बोद्धव्यम् ।

काश्यपपञ्चरात्रे ।

मदुत्थाने च शयने मत्पार्श्वपरिवर्त्तने ।

अथ योदीक्षितः कश्चिद्वैष्णवो भक्तितत्परः ॥

अन्नं वा यदि भुञ्जीत फलमूलस्तथापि वा।
अपराधमहं तस्य न क्षमामि कदाचन।
क्षिपामि नरके घोरे दृन्भुः संजायते समाः॥

नैव यावद्भगवतो वासुदेवस्य शयनादिकालोऽवधारितः(१)। अधिमासनिपाते तु कर्कटे वृश्चिके च पुण्यादिकमाचरणीयमिति। तद्विधेः सङ्क्षेपादिकं विधीयते।

आह ज्योतिःपराशरः।

अतीते च द्वये सार्द्धं पञ्चपक्षे दिनद्वये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥
दिवसस्य हरत्यर्कः षष्टिभागस्तृतौ(२) ततः।
करोत्येकमहश्छेदं तथैवैकस्य चन्द्रमाः॥

एवं सूर्य्याचन्द्रमसौ उत्तरायणानन्तरं कालं दक्षिणायनात् प्राग्-वैशाखादौ गतिविशेषवशेनाधिमासं जनयतः। दक्षिणायनात् परः क्वचित्।

आह मरीचिः।

अधिमासो भवेद् यस्मिन् द्विराषाढ़ो भवेत् तदा।
अमावास्याद्वयं दृष्ट्वा द्विराषाढ़ं प्रकल्पयेत्॥

आहाचिः।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

---

(१) पाठोऽयं न पूर्व्वापरसङ्गतः। (२) पाठोऽयं आदर्शसम्मत एव मुद्रितः परन्त्वयं न समीचीनः, षष्टिभागस्तताविल्येव पाठो युज्यते।

कृष्णपक्षे दशम्यादौ मेषं गच्छेद्दिवाकरः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

दशम्यादौ नवम्यामिति।

तथा।

माधवाद्येषु[१] मासेषु षट्सु दर्शद्वयं यदा।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

विष्णुः।

अमावास्यामतिक्रम्य यदा सङ्क्रमते रविः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥
पञ्चम्यां कृष्णपक्षे च मेषं गच्छेद्दिवाकरः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

अत्रायं सङ्क्षेपार्थः। अधिमासो यदा दक्षिणायनात् प्राक् मेषादित्रिके पतति तदा द्विराषाढ़ः प्रथमवर्षे एव सम्पद्यते, तदा दक्षिणायनानन्तरं विष्णुः स्वपिति यदा कर्कटादित्रिके अधिमासः पतति तदा आगामिवर्षे शेषकर्कटादित्ये अवश्यमाषाढ़ी-पौर्णमासी भवति तस्या वा आषाढ़त्वात् तत्रैव विष्णुः स्वपिति, द्विविधस्यापि च मासपातस्य नामावास्याद्वयादि स्मृतं, तथा च सति यदा कर्कटादित्रिके अमावास्याद्वयं भवति तदा शुक्ल-प्रतिपदि द्वितीयायां वा कन्यातुलासङ्क्रान्तिर्भवति, आगामिवर्षे मेषसङ्क्रान्तिरपि तथैव, प्रतिमासं सङ्क्रमणे च दिनद्वयवृद्ध्या पञ्चम्यां षड़शीतिमिथुनसङ्क्रान्तिर्भवति तदा द्विराषाढ़ं प्रकल्प्य कर्कटे-

(१) माधवाद्येष्विति ख०।

ऽहनि शयनं न तु परमार्थतो द्विराषाढ़ः। तथाच गणितकुश-लानां मिथुनादित्ये भोगे अतीतेऽपि गच्छमाने भास्करे मिथुन-भाग एवादित्यस्य गणिते आषाढ़ेति न तत्त्वतो गणितामावास्या-दिनाभ्यां द्विराषाढ़ो गम्यते।

तदाह मत्यः।

वृषं त्यक्त्वा चतुर्थ्यन्ते षड़शीतिः सिते यदा।
तदा दैवविदा चिन्त्यं द्विराषाढ़स्य कल्पनम्॥

तथाच ज्योतिःशास्त्रे।

शुक्लचतुर्थीमतिक्रम्य यदा सङ्क्रमते रविः।
द्विराषाढ़ं प्रकल्प्यैव कर्कटादौ स्वपेद्धरिः॥
प्रथमे च द्वितीये वा शुक्ले मेषमियाद्रविः।
द्विराषाढ़क्रिया तावद्यावद्विष्णुप्रबोधनम्॥

विष्णुः परकर्कटके स्वपेत्। शेषं शक्रोत्सवादि यथाकालमेव कार्य्यं। तथा हि।

द्विराषाढ़विकल्पोऽयं वैकुण्ठशयनं प्रति।
ध्वजस्तु[१] शतयज्ञस्य सिंह एव विधीयते॥

बौधायनश्च।

द्विराषाढ़क्रिया तावद् यावद्विष्णोः प्रबोधनम्।
विशुद्धे तु हरौ कार्य्या सूर्य्यगत्यैव सा क्रिया॥

यदा तु प्रथमे वर्षे द्विराषाढ़े कर्कटे हरिशयनं तदा कन्यायां

---

(१) अत्र ध्वजस्तु शतयज्ञस्य इत्येवं पाठो युक्तः तथाच शतयज्ञस्य शतक्रतो-रिन्द्रस्य ध्वजस्तु इन्द्रध्वजः सिंहे विधीयते इत्यन्वयः।

परिवर्त्तनं शक्रोत्थापनञ्च, तुलायां दुर्गोत्सवः, वृश्चिके वासुदेवोत्थापनं।

यदाह विरिञ्चः।

दक्षिणाशामुखे भानौ स्वपेद्यदि हरिस्तदा।
कन्या-वृश्चिकयोरेव विवर्त्तन-विबोधने॥

तथा।

कर्कटके हरौ सुप्ते शक्रध्वजक्रियाश्विने।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम्॥

इति। यदा तु प्रकल्प्यते द्विराषाढ़ः, यदा च स्वरूपतस्तदा शुक्लपक्षे श्रवणद्वये सति।

यथा कर्त्तव्यमाह सत्यः।

द्विराषाढ़े तु सम्प्राप्ते यदि सिंहे हरिः स्वपेत्।
परञ्च स्थापयेच्छक्रं कन्यायान्तु विसर्जयेत्॥

अथ कन्यायामेव श्रवणद्वयं भवति तदा नामादिश्रवणे शक्रोत्थापनं, अपरस्मिन् दुर्गोत्थापनं। तदाह।

सिंहकन्येऽथ पक्षे च शुक्लादेः पक्षसंयुते।
सिंहे परे शक्रमहः कन्यायां सिंह-दुर्गयोः(१)॥
शुक्लपक्षद्वये पूजा कल्पोऽयमपरः स्मृतः।
द्विराषाढ़स्य विद्वद्भिः स्वसमाप्तिश्च तावता॥

कुत इत्यपेक्षायामाह।

शक्रध्वजोत्थापनञ्च विष्णोश्च परिवर्त्तनम्।
मासद्वयेन निर्दिष्टं शयनादि न कोविदैः॥

---

(१) वचनमिदं आदर्शसम्मतमेव मुद्रितं परन्तु न सम्यक्।

दुर्गायाश्च त्रिभिर्मासैरधोमासं विनैव तत् ।
अधिमासनिपाते तु क्रमादिन्द्रादिकान् हरीन् ।
कन्या-तुला-वृश्चिकेषु रूपश्चोत्थापयेद्ध्रुवम् ॥

अधिमासनिपात इत्यस्यायमपरोऽर्थः यदा कर्कटादिषु पौर्णमासीद्वयं भवति "अधिमासनिपाते तु क्रमादिन्द्रादिकान् हरीन्"। इति[१] ।

तथा हि ।

आषाढ़द्वयसंयुक्तं पौर्णमासद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति।

तथाचोक्तं ।

वैशाखादितुलान्ते तु यदि पूर्णाद्वयं भवेत् ।
द्विराषाढ़ः स विज्ञेयः शयनावर्त्तनादिषु ॥

वैशाखादीत्युपलक्षणं फाल्गुनद्वयस्यापि मासस्य त्रिनक्षत्रतया सम्भवात् तत्र फाल्गुनादावधिमासपाते कर्कटे हरिशयने सति मासचतुष्टयेनोत्थानं भवति कर्कटादिचतुष्टये त्वधिमासपातान्मिथुन एवाषाढ़ाद्वा हरिशयने वृत्ते श्रावणादीनामन्यत्र द्वैविध्ये वृश्चिक एव कार्त्तिकमासो वर्त्तते तेन पञ्चभिरपि मासैस्तत्रैवोत्थानं "आभाकासितपक्षेष्वित्यस्य बहुसम्मतत्वेनाधिकत्वात् "प्रबुध्यते मासचतुष्टयेनेत्यस्य प्रायिकाभिप्रायिकानुवादत्वात् एक एवासौ मासः ।

यदाह वादरायणः ।

एकमासस्थिते सूर्य्ये यदि स्यादधिमासकः ।

(१) इत्ययं पाठः पूर्व्वापरसङ्गतिराहित्यात् न समीचीनः ।

एक एव हि मासोऽसौ[१] षष्टिभिर्दिवसैर्मतः ॥ इति ।

एवं द्विराषाढ़फले प्राप्ते द्विराषाढ़ उच्यते न तु स्वरूपतो द्विराषाढ़ः एवं परिवर्त्तन-दुर्गोत्सवयोरपि बोद्धव्यं। तद्यथा श्रावणीदयं भाद्रपदीदयं भवति तदा देवशयनान्मासचयेण कन्यायां शक्रोत्थापनम् परतः तस्माच्च मासेन दुर्गोत्थापनं मासद्वयेन विष्णोः। यदा त्वाश्विनीदयं भवति तदा सिंह एव शक्रोत्थापनं परिवर्त्तते तस्मान्मासद्वयेन दुर्गायास्त्रयेण च चयेण च विष्णोरुत्थापनं, यदा तु कार्त्तिकीदयं भवति तदापि द्विराषाढ़ेन द्विराषाढ़कल्पनं कर्कटे हरिशयनं शक्रोत्सवादि तु यथाकालमित्युक्तं। भविष्योत्तरे अधिमासनिपातेऽपि तुलायामेव कृष्णोत्थापनमभिहितं।

मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् ।
तुलायाञ्च महाराज पुनरुत्थापयेत् तु तम् ॥
अधिमासे प्रपतिते एष एव विधिक्रमः ।
नान्यथा स्वापयेत्कृष्णं नान्यथोत्थापयेत्तथा ॥

इत्यलमतिविस्तरेण ।

ब्रह्माण्डपुराणे ।

द्वादश्यान्तु सिते पक्षे मासे प्रौष्ठपदे तथा ।
शक्रमुत्थापयेद्राजा विश्व-श्रवण-वासवे ॥

'विश्वं' उत्तराषाढ़ा, 'वासवं' धनिष्ठा, श्रवणनक्षत्रस्याद्यपादे द्वादश्या योगः सुप्रशस्ततमः ।

तदुक्तं ।

---

(१) द्विमासोऽसाविति ख० ।

वैष्णवादिगते चन्द्रे शक्रमुत्थापयेन्नृप।
भरण्यामन्त्यपादे च निशि सुप्ते विसर्जयेत्॥
श्रवणस्याद्यपादे च भरण्यां समसप्तके।
शक्रं प्रसादयेद्देवं यथा राजा न पश्यति॥
सौर-भौमाधिपे वारे सूतके मृतकेऽपि वा।
भूमिकम्पादिकोत्पाते शक्रं नैव प्रशंसयेत्॥

निमित्तविशेषोपनिपाते तु भरण्यन्त्यपादानारम्भेत्यनुसन्धेयम्।

आह वृद्धवशिष्ठः।

चन्द्रगृहगते भानौ यदा स्वपिति केशवः।
शशिपुत्रगृहे भानौ न चोत्थाप्यः पुरन्दरः॥

'चन्द्रगृहं' कर्कटकः, 'शशिपुत्रगृहं' कन्येति।

अथवाह।

द्विराषाढ़े च कन्यायां शक्रं नोत्थापयेद्यदि
राज्ञो राज्यं विनश्येत प्रजा चैव निपीड्यते॥
काले तु स्थापिते शक्रे चिरं जीवति पार्थिवः।
प्रजानान्नृत्यवाद्येवं भवेद्बहुवती चितिः॥ इति।

शेषं द्विराषाढ़विवेकदर्शितमनुसन्धेयमिति।

देवीपुराणे।

प्रौष्ठपदेन चाष्टम्यां शुक्लायां शोभनर्क्षके।
आश्विने वाथ शुक्लायां श्रावणे वा समुच्छ्रयेत्॥

गर्गः।

सिंहं गते दिनकरे सितचारुपचे

हर्य्याद्यपादमुपगच्छति वै शशाङ्के ।
उत्तिष्ठते विविधमन्दिरवृन्दवन्द्यो
याम्यां ततो निशि निषीदति वज्रपाणिः ॥ इति ।

अत्र च हरिशब्देन हरिदैवत्यं श्रवणनक्षत्रमुपलभ्यते ।

भविष्योत्तरे ।

राज्ञान्येनापि कर्त्तव्यो वर्षे वर्षे महोत्सवः ।
इन्द्रध्वजसमुत्थानं महादानकृतं यदि ।
ततस्तु द्वादशे वर्षे कर्त्तव्यं नान्तरा पुनः ॥

देवीपुराणे । सूर्य्यरथयात्रायाः कथञ्चिदकरणे द्वादशाब्दे शक्रध्वजः कर्त्तव्य इत्यभिधायोक्तम् ।

इन्द्रध्वजस्य चाप्येवमुच्छ्रायो न कृतो यदि ।
ततो द्वादशमे वर्षे कर्त्तव्यो नान्तरा पुनः ॥
शक्रोत्सवो नभस्ये तु कार्य्यः सिंहगते रवौ ।
द्वादश्यां शुक्लपक्षे तु नक्षत्रे विष्णुदैवते ॥
तत्पातश्च भरण्यां स्यान्नवम्यामाश्विनस्य तु ।
अर्चयित्वा भगवतीं ततः सद्यो विसर्जयेत् ॥

भागवते ।

कन्यायां कृष्णपक्षे तु पूजयित्वा क्षपेद्दिवा ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः ॥
शुक्लपक्षे चतुर्थ्याञ्च देवीकेशविमोचनम् ।
प्रातरेव तु पञ्चम्यां स्नापयेत्तु शुभैर्जलैः ॥
सप्तम्यामम्बिकापूजा अष्टम्यां समुपोषणम् ।

व्रताय जागरैश्चैव नवम्यां विधिवद्बलिः ॥
सम्प्रेषणं दशम्यान्तु क्रीड़ाकौतुकमङ्गलैः।
नीराजनं दशम्याञ्च बलवृद्धिकरं महत् ॥

वाराहे।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयत्।
उत्तरेणार्चनं कृत्वा श्रवणेन विसर्जयेत्।
मूलेन सकलां बिल्वशाखामाहृत्य पूजयेत् ॥
अन्त्यपादो निशाभागे श्रवणस्य यदा भवेत्।
तदा देव्याः समुत्थानं नवम्यां दिनभागतः।
दशम्यां बलवृद्ध्यर्थं कुर्यान्नीराजनं नृप ॥
स्वात्यादित्यतृतीयादौ सप्ताहस्त्वाश्विने सति।
रक्षां कृत्वा दशम्यान्तु शक्त्या नीराजयेत्तदा ॥

नीराजनसंज्ञितां शान्तिं कुर्यादित्यर्थः।

आह व्यासः।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयेत्।
तदा देव्याः समुत्थानं नवम्यां न पुनर्दिवा ॥
अन्त्यपादो दिवाभागे श्रवणस्य यदा भवेत्।
तदा सम्प्रेषणं देव्या दशम्यां साधनोत्सवैः ॥
ऋक्षत्रये तु मूलादौ नवम्यामाश्विने सिते।
चण्डिकामुपचारैश्च पूजयेद्राष्ट्रवृद्धये ॥
पूर्वाषाढे तु कन्यायामुत्थानं नवयोषितः।
कुर्वतो क्षीयते राष्ट्रं प्रजा च विकला भवेत् ॥ इति।

ब्रह्माण्डपुराणे ।

तुलायां तिलतैलेन सायंसन्ध्यासमागमे ।
आकाशदीपं यो दद्यान्मासमेकं निरन्तरम् ।
सश्रीकाय श्रीपतये स श्रिया न विमुच्यते ॥
दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥

इति दीपदानमन्त्रः ।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रिस्वरूपा सा प्रदीपोज्ज्वलनाय वै ॥
कुसुम्भकुसुमैर्गन्धैर्दीपैर्गोरोचनाफलैः ।
वसुर्वंधूनववधूश्च[१] पृच्छेत् कुशलया गिरा ॥
पूजयेच्च सदा लक्ष्मीमलक्ष्मीं मलनाशिनीम् ।
चये पञ्चपताकानां ध्वजमेकं गृहे न्यसेत् ॥

वाराहे ।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
तस्मिन् शुक्ले तदा विष्णुस्तुलायामथ वृश्चिके ॥

लक्ष्मीप्रबोधः दीपालिकेति यस्य लोके प्रसिद्धिः ।

कौमुदी यत्ररात्रिश्च कौसुमी फाल्गुनी तथा ।
वासन्तिरिति विज्ञेया देशस्य महिमाश्रये ॥
आश्विने पौर्णमास्यान्तु निशादेः क्रीडनं स्मृतम् ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्तु न समीचीनः। बन्धूर्वन्धूनवन्धूंश्चेति पाठो युज्यते ।

कार्त्तिके सितपक्षादौ तिथौ तु कुसुमांशुकैः।
यक्षार्चा यक्षरात्रिः स्यात् कार्य्या चेष्टसुखाय सा॥
माघशुक्लचतुर्थ्यान्तु वरमाराध्य च श्रियः।
पञ्चम्यां कुन्दकुसुमैः पूजा सा कौसुमी स्मृता॥
फाल्गुने पौर्णमास्यान्तु यदा वासविलासकः।
ज्ञेया सा फाल्गुनी लोके कार्य्या लोकसमृद्धये॥
चैत्राष्टम्यामशोकैस्तु त्रयोदश्यां स्मरार्चनम्।
तच्च कार्य्यमशोकार्थं ज्ञेया वासन्तिकेति सा॥

अथ ज्योतिःशास्त्रे।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले यदा विष्णुस्तुलायामधिगच्छति।
उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्दशीम॥

अथ भविष्यत्पुराणे।

स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत्।
प्रतिपद्ब्रह्मणश्चापि गुडमिश्रैः सदीपकैः।
वासोभिरहतैश्चाद्यैर्गच्छेत्तद्ब्रह्मणः पदम्॥
पुष्पैर्गन्धैर्नैवेद्यैर्वस्त्रैरात्मानं पूजयेद्बुधः।
तस्यां प्रतिपदायाञ्च स गच्छेद्ब्रह्मणः पदम्॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये विष्णुशयनादिकालनिर्णयो नाम सप्तदशोऽध्यायः।

---

## अथाष्टादशोऽध्यायः।

---

### अथ विष्णुनामकीर्त्तने कालविशेषः।

विष्णुधर्मोत्तरे वज्र उवाच।

कस्मिन् काले तु देवस्य किं किं नाम प्रकीर्त्तयेत्।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे॥

मार्कण्डेय उवाच।

पुरुषं वासुदेवञ्च व्यासं सङ्कर्षणं प्रभुम्।
प्रद्युम्नमनिरुद्धञ्च क्रमादेषु प्रकीर्त्तयेत्।
बलभद्रं तथा कृष्णं कीर्त्तयेत दिनक्षये॥
माधवं पुण्डरीकाक्षं तथा वै भोगशायिनम्।
पद्मनाभं हृषीकेशं तथा देवं त्रिविक्रमम्॥
क्रमेण राजशार्दूल वसन्तादिषु कीर्त्तयेत्।
विष्णुञ्च मधुहन्तारं तथा देवं त्रिविक्रमम्॥
वामनं श्रीधरञ्चैव हृषीकेशं तथैव च।
दामोदरं पद्मनाभं केशवञ्च यदूत्तमम्॥
नारायणं माधवञ्च गोविन्दञ्च तथा क्रमात्।
चैत्रादिषु च मासेषु देवदेवमनुस्मरेत्।
प्रद्युम्नमनिरुद्धञ्च पक्षयोः शुक्ल-कृष्णयोः॥
शर्वः सर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः।
आदित्यादिषु वारेषु क्रमाद्देवमनुस्मरेत्॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः॥
अव्यक्तः पुण्डरीकाक्षो विश्वकर्मा शुचिश्रवाः।
सम्भवो भावनोभर्त्ता प्रभवः प्रभुरीश्वरः॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
अग्राह्यः शाश्वतो धाता कृष्णश्चेताननुस्मरन्।
देवदेवस्य नामानि कथितानि च यादव॥
ब्रह्माणं श्रीपतिं विष्णुं कपिलं श्रीपतिं प्रभुम्।
दामोदरं हृषीकेशं गोविन्दं मधुसूदनम्॥
भूधरङ्गदिनं देवं शङ्खिनं पद्मिनं तथा।
चक्रिणञ्च महाराज प्रथमादिषु संस्मरेत्।
सर्वदा सर्वदेवानां देवदेवस्य यादव॥
नामानि सर्वाणि जनार्दनस्य
कालस्य सर्वः पुरुषप्रवीर।
तस्मात्सदा सर्वगतस्य नाम
ग्राह्यं यथेष्टं वरदस्य राजन्॥

वज्र उवाच।

कार्यारम्भे कथं कस्मिन् किं नाम परिकीर्त्तयेत्।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे॥

मार्कण्डेय उवाच।

चक्रिणं हलिनञ्चैव शार्ङ्गिणं खड्गिनं तथा।
मोक्षार्थी प्रवसन् राजन् दिक्षु प्राच्यादिषु स्मरेत्॥

अच्युतञ्चाधिकञ्चैव सर्वं सर्वेश्वरं प्रभुम् ।
संस्मरेत् पुरुषं भक्त्या व्यवहारेषु सर्वदा ॥
कूर्मं वाराहं मत्स्यं वा जलप्रतरणे स्मरेत् ।
भ्राजिष्णुमग्निजनने जपेन्नाम त्वतन्द्रितः ॥
संग्रामाभिमुखो गच्छन् संस्मरेत्त्वपराजितम् ।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ॥
नेत्रबाधासु सर्वासु हृषीकेशं तथैव च ।
अच्युतञ्चामृतञ्चैव जपेदौषधकर्मणि ॥
गरुडध्वजानुस्मरणादापदो मुच्यते नरः ।
ज्वरदुष्टशिरोरोगविषवीर्यं प्रशाम्यति ॥
ग्रहनक्षत्रपीडासु देवबाधाटवीषु च ।
दस्युवैरनिरोधेषु व्याघ्रसिंहादिसङ्कटे ।
अन्धकारे तथा तीव्रे नरसिंहेति कीर्त्तयेत् ॥
नारायणं शार्ङ्गधरं श्रीधरं गजमोचणम् ।
वामनं खड्गिनञ्चैव दुःस्वप्नेषु तु संस्मरेत् ॥
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् ।
बलभद्रन्तु युद्धार्थी कृष्यारम्भे हलायुधम् ।
उत्तरणे वणिज्यार्थी श्रीशमभ्युदये नृप ॥
जगतो मङ्गलं विष्णुं माङ्गल्येषु च कीर्त्तयेत् ।
अग्निघातेष्वशेषेषु विशोकेषु तथा जपेत्(१) ॥
उत्तिष्ठन् कीर्त्तयेद्विष्णुं प्रस्वापे माधवं नरः ।

(१) विशोकेति तथा जपेदिति ख० ।

भोजने चैव गोविन्दं सर्व्वत्र मधुसूदनम् ॥
नारायणं सर्व्वकालं क्षुतप्रस्खलितादिषु ।
स्नाने देवार्च्चने होमे प्रणिपाते प्रदक्षिणे ॥
कीर्त्तयेद्वासुदेवञ्च अनुक्तेष्वपि यादवम् ।
कार्य्यारम्भे तथा राजन् यथेष्टं नाम कीर्त्तयेत् ॥

सर्व्वाणि नामानि हि तस्य राजन्
सर्व्वार्थसिद्धौ तु भवन्ति पुंसः ।
तस्माद्यथेष्टं खलु देवनाम
सर्व्वेषु कार्य्येषु जपेत भक्त्या ॥

इति विष्णुनामकीर्त्तने कालविशेषः ।

---

## अथ मुख्यकालातिक्रमे कालाः ।

ते च गौणा वाचनिकाश्चेति द्विप्रकाराः। तदेवं विचार्य्यते मुख्यकालासम्भवे गौणकालग्रहणं कार्य्यं न वेति, ननु को मुख्यः को वा गौणः। यो विहितः स मुख्यः। यथा वृद्धिश्राद्धादौ प्रातरादिः। यस्त्वविहितः तत्समीपवर्त्ती तेष्वेवाङ्गभावं नीयमानः सङ्गवादिः स गौणः। तदाह त्रिकाण्डमण्डनः।

स्वकालादुत्तरो गौणः कालः सर्व्वस्य कर्म्मणः।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत् ।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि ॥ इति ।

अस्यार्थः पूर्व्वोत्तरयोः पूर्व्वस्य कर्म्मणो यः स्वकालस्तस्मादुपरितनः उपरितनकर्म्मकालाच्च पूर्व्वभावी पूर्व्वापरयोरन्तरालकाल इति यावत् सपूर्व्वस्मिन् कर्म्मणि गौणः। यद्वा यथोक्तान्तरालवदागामिक्रिया-

मुख्यकालस्यापि पूर्वस्मिन् कर्मणि गौणकालतां मन्यन्त इति। कथं पुनरुत्तरकर्मकालस्य पूर्वकर्मानुष्ठानाय ग्रहणमाशङ्क्यते यतः स्वकालात् प्रच्युतं पूर्वं कर्म तावद्विनष्टप्रायं उत्तरस्य स्वकालादप्रच्युतत्वाद्विनष्टरूपं तत्र यद्युत्तरकर्मकाले पूर्वं कर्म क्रियते तदा विनष्टसमाधानार्थं अविनष्टविनाशनं प्रसज्यते। तन्मृतजीवनाय जीवन्मरणमिव स्यात्। अत्र ब्रूमः। उत्तरे कर्मकाले द्वयोरवकाशे सतीदमुच्यते न पुनरसत्यपि तस्मिन्निति। ननु मुख्यकालसमीपवर्त्तिनः कालस्याभिधेयाविनाभूतप्रवृत्तिलभ्यत्वाल्लाक्षणिकत्वमेवोचितं, सत्यमेवं, तथापि तत्कालोपलक्षणीभूतातपमार्द्दवादिगुणोपनीतया लौकिक्या प्रातरादिशब्दप्रवृत्त्या तस्य गौणत्वमप्यस्त्येवेति गौणत्वोक्तिर्न विरुध्यते। ननु तदनुपदेशात्कथं ग्राह्यत्वमाशङ्क्यते, प्रतिनिधिन्यायेनेति ब्रूमः। नन्वेवं तर्हि यथाकथञ्चित्सादृश्यान्मध्याह्नादावपि कदाचित् प्रातरादिकृत्यानि प्रसज्येरन्, किमत्रानिष्टं क्रियते एवं हि कदाचिदत्यन्तसादृश्यवतः प्रचुरगौणप्रयोगसङ्गिनः सङ्गवादेरलाभात्, तदेवमस्मिन् संशये कश्चित् पूर्वाह्णे दैविकं श्राद्धमित्यादिकालसंयुक्तेषु वाक्येषु कालं प्रति कर्मणो गुणभावेन विधानं मत्वा प्रधानभूतविहितकालातिक्रमेण गुणभूतकर्मानुग्रहाय कालान्तरानुष्ठानं न कार्य्यमिति पूर्वपक्षमभिप्रेत्य सिद्धान्तितवान्, काले हि कर्म चोद्यते न कर्मणि कालः अतः कर्मणामेव प्राधान्यं कालमनूद्य कर्मणो विधानात्। ततः कर्म प्रति गुणभूतविहितकालातिक्रमे प्रधानभूतकर्मानुग्रहार्थं गौणकालेऽप्यनुष्ठानं कार्य्यं। कालहाने कर्मणोऽपि त्यागस्यान्याय्यत्वात्। न ह्येकव्यञ्जनं विना शेषभोजनमेव त्यज्यते। तदयुक्तम्। न तावत्कर्म-

गुणीभावेनात्र पूर्व्वपक्षो घटते कर्म्मणः फलसम्बन्धात्। फलवत्सन्निधावफलन्तदङ्गमिति न्यायेन कालस्यैवाङ्गत्वात्। न च कर्म्मणः कालार्थतया परार्थत्वात् फलश्रुतिरर्थवाद इति वाच्यम्। कालस्य फलवत्कर्म्मार्थत्वावगमात्, नापि कालगुणीभावोक्तः सिद्धान्तो घटते, असिद्धहेत्वाभासोपन्यासात्, न ह्यत्र कालानुवादेन कर्म्म विधीयते, कालस्यान्यतः प्राप्तिविरहात्। ननु कालस्य वाक्यान्तरेण प्राप्त्यभावेऽप्यमावास्यादिरूपेण लोकव्यवहारादेव ज्ञातस्यानुवादो भविष्यति। नैवम्। लोकसिद्धकालस्वरूपानुवादेन कर्म्मविधावस्य स्वयमफलत्वेन फलवत्कर्म्माङ्गत्वाभावेन च विधेरानर्थक्यप्रसङ्गात्। किं चास्मिन् कर्म्मण्युपदेश्यस्य कालस्य न कर्म्मान्तरसम्बन्धो घटते तस्यैतत्कर्म्मानुष्ठानेऽनन्तरमेवाऽनुष्ठितत्वात्। नन्वेवं तर्हि यजेत स्वर्गकाम इत्यत्रापि लोकादेवावगतं स्वर्गकामिनमनूद्य यागविधेरवधारणात् कथं न विध्यानर्थक्यं, उच्यते, यद्यपि स्वर्गकामस्योद्देश्यतया वाक्येऽन्वयः प्रतीयते तथापि भावनायाः प्रथमं भाव्यस्यापेक्षणात् पुरुषस्य च सिद्धरूपतया तदनर्हत्वात्स्वर्गकामपदेन कामनाविषयभूतः स्वर्ग एव साध्यत्वेन समर्प्यते स्वर्गकामस्तु पूर्व्वसिद्ध एवानूद्यते, यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ विशेष्याणामृत्विजां प्राप्तत्वादप्राप्तविशेषणमात्रपरत्वं वाच्यं एवमिहापि। तदुक्तं मण्डनमिश्रैः।

अपेक्षितत्वात् भाव्यस्य कामशब्दा हि तत्पराः।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितमिति॥

अतः कालानुवादेन तत्र कर्म्मविधिरित्ययुक्तम्। तदेवं यथोक्तौ पूर्व्वोत्तरपक्षावयुक्तौ कौ च तर्हि तौ युक्तौ। उच्यते। तत्र तावत्पूर्व्वपक्षः नित्यं नैमित्तिकं आवश्यकत्वेन प्राप्ते तादृग्विधस्वरूपनिर्व्वाहार्थं यथा शक्नुयादित्युपबन्धे विहितासम्पत्तौ तत्सदृशप्रतिनिधिग्रहणं

कर्त्तव्यमितिस्थिते स्वकालासम्पत्तौ गौणकालग्रहणं कार्य्यम्।

तदाह त्रिकाण्डमण्डनः।

मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशोभवेदिति॥

'ईदृशः' मुख्यकालसदृशः, अनेनास्य प्रतिनिधित्वेन योग्यता दर्शिता। मृततिथावपि गौणकालग्रहणं दर्शयन्ति।

यथाकथञ्चित् कर्त्तव्यं नित्यं कर्म विजानता।
न प्राप्तस्य विलोपोऽस्ति पैटकस्य विशेषत इति॥

तथा।

दिवोदितानि कर्माणि प्रमादादकृतानि वै।
यामिन्याः प्रहरं यावत्तावत् सर्व्वाणि कारयेत्।
सन्धौ रात्रौ न कर्त्तव्यं श्राद्धं खलु विचक्षणैः॥ इत्यादि।

सन्ध्यादिकालविशेषनिषेधश्च गौणत्वेन तत्कालग्रहणप्राप्तौ सत्या-मेवावकल्पते। -नित्यनैमित्तिकेषु च यथा शकुयात् तथा कुर्य्या-दित्युपबन्धसामर्थ्यान्नित्यवदतस्ततोऽन्यान्यप्यङ्गान्यनित्यानि भवन्ति।

तथाच पैठीनसिः।

प्रधानसचिवान्यङ्गानि भवन्ति न भवन्ति चेति।

ननु यदि मुख्यकालातिक्रमे गौणकालग्रहणं न विरुद्धम् तर्हि दर्शपूर्णमासपार्वणश्राद्धादीनाममावास्यादिविहितकालाभावे पञ्च-म्यादिषु कर्त्तव्यत्वं प्रसज्येत। का नामैषा प्रसक्तिरभिमतमेव हि गौणकालस्वीकारवादिनस्तदा तदनुष्ठानम्। एतच्च गौणकालग्रहणं न काम्येषु। तत्र हि सर्वाङ्गोपसंहारशक्तस्यैवाधिकारप्रतिपादनात्। गौणकालग्रहणे तु कर्मानुष्ठाने कश्चिद्विशेषस्त्रिकाण्डमण्डनोक्तप्रस-ङ्गादुच्यते।

गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत् ।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥

कालान्तरोदितं कर्म एतेषु पूर्वोक्तलक्षणेषु गौणकालेष्वाचरेत् । पक्षान्तरमपि तेनैवोक्तं ।

प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ।

अचाकृत्वेत्यत्र पूर्वकालताप्रतीतिरविवक्षिता । तदेवं गौणकालग्रहणे प्राप्तेऽभिधीयते सर्वत्र सप्तम्यन्तनिर्द्दिष्टस्य कालस्यानुपादेयत्वे उद्देश्यैकस्वभावस्य निमित्तत्वेनाभिधानादधिकारिविशेषणत्वे विहितकालमन्तरेणाधिकाराभावात् कालान्तरे कृतमकृतमेव स्यादिति गौणकालग्रहणं न कार्य्यं विहितकालाभावेऽधिकाराभावः सान्तपनीयाधिकरणे प्रापणाच्च निमित्तस्येत्यत्र सूत्रे प्रतिपादितः ।

अत एव लौगाक्षिः ।

गणिताज्ज्ञायते कालः काले तिष्ठन्ति देवताः ।
वरन्त्वेकाहुतिः काले नाकाले लक्षकोटयः ॥

यत्तु त्रिकाण्डमण्डणेन गौणकालग्रहणमुक्तं तत् पूर्वपक्षन्यायस्यैव सिद्धान्ततामभिमन्यमानेनोक्तमित्युपेक्षणीयं । यत्तु यथाकथञ्चिदित्यादिस्मरणं न तत्र गौणकालग्रहणं प्रतिपाद्यते किन्त्वग्रहणमेव । यतस्तस्यायमर्थोऽवगम्यते स्वकालप्राप्तस्य कर्म्मणोमुख्यद्रव्याद्यसम्पत्तिवशादिलोपोऽननुष्ठानं न कार्य्यम्, किन्तु स्वकाल एव यथाकथञ्चिन्मुख्यद्रव्यसदृशोपादानेन किञ्चिद्विकलमपि कर्त्तव्यमिति । यदपि "दिवोदितानि कर्म्माणीत्यादिवचनं न तेन सर्व्वेष्वपि कर्म्मसु सर्व्वेषां च गौणकालानां गौणकालयुक्त्या ग्रहणमुच्यते किन्तु केषुचिदेव कर्म्मसु किञ्चिदेव कालान्तरमनुकल्पत्वेन मुख्यकालवद्व्यायादप्राप्तमेव विधीयते । अतो नैतद्वचनवलेन संवत्सरर्त्तु-मास-तिथ्या-

दिकालविशेषविहितानि कर्माणि तत्तत्कालातिक्रमे कालान्तरेऽपि कर्त्तुं युज्यन्ते। यत्तु सन्ध्या-रात्र्योः श्राद्धनिषेधः सोऽपि रागतः प्राप्तस्य भक्षणादेरिव न्यायाभासोत्पादितमोहप्राप्तस्योपपद्यते। अथवा।

"द्रव्यं ब्राह्मणसम्पत्तिः श्राद्धं प्रतिरुचिस्तथा।
अकाले यदि वा काले तीर्थश्राद्धं सदा नरैः॥

प्राप्तैरेव हि कर्त्तव्यम्"। इत्यादिभिरपराह्णादिव्यतिरिक्तकालप्राप्तस्य श्राद्धस्य सन्ध्यादिकालेष्वयं प्रतिषेधः। यत्तु मुख्यकालातिक्रमे नित्य-नैमित्तिकानां गौणकालेऽनुष्ठानं दृश्यते तत् क्वचित् शिष्ट-गर्हापरिहार-मनःपरितोषाद्यर्थं, क्वचिच्चानुकल्पत्वेन कालान्तरविधि-रित्यनवद्यम्। उपदिष्टकालातिक्रमे चाधिकाराभावादेव मुख्यद्रव्य-लोभान्मुख्यकालातिक्रमो न कार्य्यः, एतदेव च सन्देहपूर्वकमुपन्यस्य चिकाण्डमण्डनेन निर्णीतम्।

मुख्यकाले हि मुख्यञ्चेत् साधनं नैव लभ्यते।
तत्काल-द्रव्ययोः कस्य मुख्यत्वं गौणतापि वा॥
मुख्यकालमुपाश्रित्य गौणं मुख्यस्य साधनम्।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम्॥

तदेवमेतत्सिद्धं वचनमन्तरेण गौणकालग्रहणं न कार्य्यं सति तु वचने गौणस्य, तस्मात् परस्यापि ग्रहणं कार्य्यमिति।

इति श्रीमद्राजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसक-लविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णयः समाप्तः।

शिवमस्तु।

---

# विज्ञापनम् ।

---

ग्रन्थोऽयं चतुर्व्वर्गचिन्तामणिर्नाम सुविख्यातकीर्त्तिना पण्डितकुलतिलकेन महामहोपाध्यायेन श्रीमता हेमाद्रिणा विरचितः। स किल दाक्षिणात्यजनपदे वात्सगोत्रीयात् कामदेवनामकाद्द्विजोत्तमादुद्भूत्। वासुदेवः वामनदेवश्च क्रमेणास्य पितामहः प्रपितामह आसीत्। हेमाद्रिस्तु देवगिरिनगरीपतेः यादववंशावतंशस्य सुप्रथितनामधेयस्य महादेवभूभुजः सकलकरणाधिपति-पण्डित आसीत्। स राजा पञ्चग्रहधरेन्दुमिते शकनृपतिसंवत्सरे समुदित-वान्। हेमाद्रिश्च तत्समकालिक एवासीत्।

चतुर्व्वर्गचिन्तामणिः व्रतखण्ड-दानखण्ड-तीर्थखण्ड-मोक्षखण्ड-परि-शेषखण्डात्मकपञ्चावयवसम्पन्नः। तत्र व्रतखण्डं दानखण्डञ्च आसियाटिक-सोसाइटीसमाजाध्यक्षमहोदयानामनुमत्या तत्रभवतां पण्डिताग्रगण्यानां ७ भरतचन्द्रशिरोमणिमहोदयानां परिशोधनप्रयत्नेन च मुद्रितं। तत उक्त-महोदयानां परलोकावाप्तौ परिशेषखण्डान्तर्गतश्राद्धखण्डं कालखण्डञ्च उक्त-समाजाध्यक्षमहोदयानां अनुमत्या आवयोः परिशोधनप्रयत्नेन च मुद्रितं। परिशोधने त्रीणि आदर्शपुस्तकानि सहायभूतानि आसन्। तेषां द्वयं क-ख-चिह्नितं वाराणसीस्थानाल्लब्धं अपरञ्च कलिकातासंस्कृतविद्यामन्दिरपुस्तका-लयादधिगतं। त्रीण्येव पुस्तकानि अन्तरान्तरा अपरिशुद्धानि पूर्व्वापरसङ्गति-रहितानि च अतो बहुषु स्थानेषु स्मार्त्त-शूलपाणि-मन्वादिस्मृतिनिबन्धानां साहाय्यमवलम्बितं तथापि—

> महारण्यच्छेदात् परमपि कियच्छिष्टमपरं
> अतश्चेतुर्दोषो न हि भवति भाव्ये हि विषये।
> वनन्यायादत्र क्वचिदपि भवेद्दुष्टमपरं
> ततः क्षम्यं याचे विनतिततिपूर्व्वं हि कृतिन इति॥

अनन्तरं परिशेषखण्डान्तर्गतप्रायश्चित्तखण्डस्य मुद्रणं भविष्यति, सम्भाव्यते एतन्मुद्रणं महात्मनामुपकाराय कल्प्यते इत्यलं पल्लवितेन।

श्रीयज्ञेश्वरशर्म्मणः—

श्रीकामाख्यानाथशर्म्मणः—

---

# सूचीपत्रम्।



## ( अ )



## ( आ )

## ( उ )



## ( ए )



## ( क )

## ( ग )



## ( च )



## ( ज )

## ( त )



## ( द )



## ( न )

## ( प )

( ब )

## ( भ )



## ( म )



## ( य )



## ( र )

## ( व )



## ( श )

---

# पुराणनामानि ।

## अ ।



## आ ।



## क ।



## ग ।



## द ।

## न ।



## प ।

## ब ।



## भ ।

## म ।



## र ।

## ल।



## व।

## श ।



## स ।



---

# ऋषिनामानि ।

## अ ।



## आ ।



## उ ।



## ऋ ।



## क ।

## ग ।

## प ।

## ब ।

## भ ।



## म ।

## य ।

## ल ।



## व ।

## श ।

## स ।

## ह ।

# स्मृतिग्रन्थनामानि ।

## आ ।



## क ।



## ख ।



## ग ।



## च ।



## छ ।



## त ।



## द ।

प ।



ब ।



भ ।



म ।



य ।



ल ।



श ।

## ष ।



## स ।

## संग्रहकारनामानि।

# ज्योतिःशास्त्रनामानि ।



---

